| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| गवां ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवधः। | स्त्रीशूद्रबालवृद्धानामर्द्धम्। | | | |
| ब्राह्मणस्वामिकानां बहूनां गवां ब्राह्मणक्षत्रियवैश्यकर्तृकैकप्रयत्ननिष्पन्नज्ञानकृतवधः। | द्विगुणत्रैमासिकव्रतम्।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ३४ धेनवः। | १०२ कार्षापणाः। | २ वृषौ २० गावः। अशक्तौ ३० कार्षापणाः। |
| क्षत्रियस्वामिकानां बहूनां गवां ब्राह्मणक्षत्रियवैश्यकर्तृकैकप्रयत्ननिष्पन्नज्ञानकृतवधः। | द्विगुणषाण्मासिकव्रतम्।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | २४ धेनवः। | ७२ कार्षापणाः। | यथाशक्ति। |
| वैश्यस्वामिकानां बहूनां गवां ब्राह्मणक्षत्रियवैश्यकर्तृकैकप्रयत्ननिष्पन्नज्ञानकृतवधः। | चतुर्गुणमासव्रतम्।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | २० धेनवः। | ६० कार्षापणाः। | यथाशक्ति। |
| शूद्रस्वामिकानां बहूनां गवां ब्राह्मणक्षत्रियवैश्यकर्तृकैकप्रयत्ननिष्पन्नज्ञानकृतवधः। | ८ प्राजापत्यानि।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्।<br>स्त्रीत्वाद्युभयधर्म्मवत्त्वे पादः।<br>प्रयत्नभेदे प्रायश्चित्तावृत्तिः। | ८ धेनवः। | २४ कार्षापणाः। | यथाशक्ति। |
| ज्ञानकृतबहुकर्तृकब्राह्मणस्वामिकैकगवीवधः। | प्रत्येकं त्रैमासिकव्रतपादः।<br>अज्ञानतस्तदर्द्धम्। | ५ धेनवः। | १२॥० कार्षापणाः। सपादधेनुचतुष्टयसङ्कलनात्। | ३॥० कार्षापणाः। |
| ज्ञानकृतबहुकर्तृकक्षत्रियस्वामिकैकगवीवधः। | प्रत्येकं षाण्मासिकव्रतपादः।<br>अज्ञानतस्तदर्द्धम्। | ३ धेनवः। | ९ कार्षापणाः। | यथाशक्ति। |
| ज्ञानकृतबहुकर्तृकवैश्यस्वामिकैकगवीवधः। | प्रत्येकं द्विगुणमासव्रतपादः।<br>अज्ञानतस्तदर्द्धम्। | ३ धेनवः। | ७॥० कार्षापणाः। सार्द्धद्वयधेनुसङ्कलनात्। | यथाशक्ति। |
| ज्ञानकृतबहुकर्तृकशूद्रस्वामिकैकगवीवधः। | प्रत्येकं प्राजापत्यम्।<br>अज्ञानतस्तदर्द्धम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| द्वाभ्यामेकगवीवधः। | यद्यत्स्वामिकाया गोर्वधे यद्यत्प्रायश्चित्तमुक्तं प्रत्येकं संपूर्णं तत्तत् प्रायश्चित्तम्। | | | |
| द्वाभ्यामेकप्रयत्ननिष्पन्नबहुगवीवधः। | यद्यत्स्वामिकाया गोर्वधे यद्यत्प्रायश्चित्तं प्रत्येकं तद्द्विगुणम्। | | | |
| एकप्रयत्ननिष्पन्नबहुकर्तृकबहुगवीवधः। | प्रत्येकं तत्तद्वधोक्तव्रतपादद्वयम्। | | | |
| एकप्रयत्ननिष्पन्नाभ्यासकृतबहुकर्तृकबहुगवीवधः। | प्रत्येकं तत्तद्वधोक्तव्रतद्विपादप्रायश्चित्तावृत्तिः। | | | |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकब्राह्मणस्वामिकैकहायनगवीवधः। | त्रैमासिकव्रतपादः।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ५ धेनवः। | १२॥० कार्षापणाः। सपादधेनुचतुष्टयसङ्कलनात्। | ३॥० कार्षापणाः। |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकब्राह्मणस्वामिकद्विहायनगवीवधः। | त्रैमासिकव्रतार्द्धम्।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ९ धेनवः। | २५॥० कार्षापणाः। सार्द्धाष्टधेनुसङ्कलनात्। | ७॥० कार्षापणाः। |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकब्राह्मणस्वामिकत्रिहायनगवीवधः। | पादन्यूनत्रैमासिकव्रतम्।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | १३ धेनवः। | ३८।० कार्षापणाः। पादोनत्रयोदशधेनुसङ्कलनात्। | ११।० कार्षापणाः। |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकक्षत्रियस्वामिकैकहायनगवीवधः। | षाण्मासिकव्रतपादः।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ३ धेनवः। | ९ कार्षापणाः। | यथाशक्ति। |

| अधोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकक्षत्रियस्वामिकद्विहायनगवीवधः। | षाण्मासिकव्रतपादद्वयम्।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ६ धेनवः। | १८ कार्षापणाः। | यथाशक्ति। |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकक्षत्रियस्वामिकत्रिहायणगवीवधः। | पादन्यूनषाण्मासिकव्रतम्।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ९ धेनवः। | २७ कार्षापणाः। | यथाशक्ति। |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकवैश्यस्वामिकैकहायनगवीवधः। | मासैकव्रतार्द्धम्।<br>अज्ञानतस्तदर्द्धम्। | ३ धेनवः। | ७॥० कार्षापणाः। सार्द्धद्वयधेनुसङ्कलनात्। | यथाशक्ति। |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकवैश्यस्वामिकद्विहायनगवीवधः। | मासव्रतम्।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ५ धेनवः। | १५ कार्षापणाः। | यथाशक्ति। |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकवैश्यस्वामिकत्रिहायणगवीवधः। | पादोनं द्विगुणमासव्रतम्।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ८ धेनवः। | २२॥० कार्षापणाः। सार्द्धसप्तधेनुसङ्कलनात्। | यथाशक्ति। |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकशूद्रस्वामिकैकहायनगवीवधः। | १ प्राजापत्यम्।<br>अज्ञानतस्तदर्द्धम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकशूद्रस्वामिकद्विहायनगवीवधः। | २ प्राजापत्ये।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | २ धेनू। | ६ कार्षापणाः। | यथाशक्ति। |
| ज्ञानकृतब्राह्मणक्षत्रियवैश्यकर्तृकशूद्रस्वामिकत्रिहायणगवीवधः। | ३ प्राजापत्यानि।<br>अज्ञानतस्तदर्द्धम्।<br>स्त्रीशूद्रबालवृद्धानामर्द्धम्। | ३ धेनवः। | ९ कार्षापणाः। | यथाशक्ति। |
| क्षीणाया गोरक्षीणत्वभ्रमेणाहारप्रचारनिर्गमरोधनिमित्तवधः। | प्राजापत्यपादः। | १ धेनुः। | ॥० पणाः। धेनुपादसङ्कलनात्। | यथाशक्ति। |
| | चैरग्ज्ञाने प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणपादः।<br>इदन्तु सर्व्वस्वामिकायाः सर्व्ववयस्काया गोः सर्व्वकर्तृकवधे बोद्धव्यम्। | २ धेनू। | ५॥‹० कार्षापणाः। पादार्द्धोनधेनुद्वयसङ्कलनात्। | यथाशक्ति। |
| क्षीणाया गोरक्षीणत्वभ्रमेण अकालबन्धनायथाबन्धननिमित्तवधः। | प्राजापत्यपादद्वयम्। | १ धेनुः। | १॥० कार्षापणाः। धेन्वर्द्धसङ्कलनात्। | यथाशक्ति। |
| | चैरग्ज्ञाने तु प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणपादद्वयम्। एतदपि सर्व्वस्वामिकायाः सर्व्ववयस्काया गोः सर्व्वकर्तृकवधे बोद्धव्यम्। | ४ धेनवः। | ११।० कार्षापणाः। पादोनधेनुचतुष्टयसङ्कलनात्। | यथाशक्ति। |
| क्षीणाया गोरक्षीणत्वभ्रमेण हलशकटादियोजननिमित्त वधः। | प्राजापत्यपादत्रयम्। | १ धेनुः। | २।० कार्षापणाः। पादोनधेनुसङ्कलनात्। | यथाशक्ति। |
| | चैरग्ज्ञाने तु चान्द्रायणपादत्रयम्। | ६ धेनवः। | १६॥‹० कार्षापणाः। पादोनसार्द्धसप्तधेनुसङ्कलनात्। | यथाशक्ति। |
| क्षीणाया गोरक्षीणत्वभ्रमेण कूपावटादिषु भयादिना निपातनेन शास्त्रीयदण्डनिपातनेन च वधः। | प्राजापत्यम्।<br>चैरग्ज्ञाने प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणम्। एतदपि सर्व्वस्वामिकादिविषयम्। यद्वत्स्वामिकयद्वयस्तु- | १ धेनुः।<br>८ धेनवः। | ३ कार्षापणाः।<br>२२॥० कार्षापणाः। सार्द्धसप्तधेनुसङ्कलनात्। | यथाशक्ति।<br>यथाशक्ति। |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| | कर्त्तृकयद्‌यद्गववधे यद्‌यत्प्रायश्चित्तमुक्तं अप्रवृत्तप्रवर्त्तकरूपप्रयोजकस्य तत्तत् प्रायश्चित्तस्य पादत्रयम्। प्रवृत्तप्रवर्त्तकरूपप्रयोजकस्य पादद्वयम्। स्वल्पप्रहर्त्तृरूपानुग्राहकस्य पादत्रयम्। वध्यप्रतिरोधकरूपानुग्राहकस्य पाददयम्। | | | |
| ब्राह्मणक्षत्रियवैश्यकर्त्तृकशूद्रेतरस्वामिकगवापालननिमित्तवधः। | सेतिकर्त्तव्यताकप्राजापत्यम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। इति कर्त्तव्यता यथा। सशिखं वपनं कार्य्यं त्रिसन्ध्यमवगाहनम्। शृङ्गैर्वापि खुरैर्युक्तं लाङ्गूलश्रवणादिभिः॥ आर्द्रमेव हि तच्चर्म्म परिधाय स गां व्रजेत्। तासां मध्ये वसेद्रात्रौ दिवा ताभिः समं व्रजेत्॥ ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः। प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्‌ब्राह्मणभोजनम्॥ अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम्॥ इति पराशरोक्ता। | २ धेनू। | ६ कार्षापणाः। | १ वृषः १ गौः। अशक्तौ ६ कार्षापणाः। |
| ब्राह्मणक्षत्रियवैश्यकर्त्तृकशूद्रस्वामिकगवापालननिमित्तवधः। | प्राजापत्यद्वयम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | २ धेनू। | ६ कार्षापणाः। | यथाशक्ति। |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्त्तृकशूद्रेतरस्वामिकाप्राप्तदम्यावस्थगोवत्सापालननिमित्तवधः। अप्राप्तदम्यावस्था तु त्रिहायणपर्य्यन्तम्। | सेतिकर्त्तव्यताकप्राजापत्यपादः। | धेनोरर्द्धस्यासम्भवात् १ एका धेनुः। | १॥०कार्षापणाः। | १॥० कार्षापणाः। |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्त्तृकशूद्रस्वामिकाप्राप्तदम्यावस्थगोवत्सापालननिमित्तवधः। | प्राजापत्यव्रतद्वयपादः। | धेनोरर्द्धस्यासम्भवात् १ एका धेनुः। | १॥०कार्षापणाः। | यथाशक्ति। |
| उत्सृष्टवृषवत्सतर्य्योर्वधः। | भूतपूर्व्वस्वामिकगववधप्रायश्चित्तद्विगुणम्। पूर्व्वस्वाम्यज्ञाने ब्राह्मणस्वामिकगववधद्विगुणप्रायश्चित्तम्। | | | |
| गवां शृङ्गभङ्गास्थिभङ्गचर्म्मनिर्म्मोचनलाङ्गूलच्छेदनम्। | दशरात्रं वज्रव्रतम्। मासार्द्धं यवपानम्। प्राजापत्यं वा। वज्रव्रतं यथा। गोमूत्रेण समायुक्तं यावकञ्चोपयोजयेत्। एकाहेनैव कृच्छ्रोऽयमुक्तस्त्वाङ्गिरसा स्वयम्। सर्व्वपापहरो दिव्यो नाम्ना वज्र इति स्थितः॥ * ॥ शृङ्गभङ्गादिना षण्मासाभ्यन्तरे गोमरणे अन्यूनं वधप्रायश्चित्तं करणीयम्। गुरुणा समेन वा तेन प्रायश्चित्तेन शृङ्गभङ्गादिप्रायश्चित्तसिद्धिः। षण्मासोत्तरमरणे शृङ्गभङ्गादिप्रायश्चित्तमात्रं कर्त्तव्यम्॥ | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| गवां मुष्कमोषः। | यत्कर्त्तृकयत्स्वामिकगववधे यत्प्रायश्चित्तमुक्तं तत्कर्त्तृकतत्स्वामिकगवमुष्कमोषे तत्प्रायश्चित्तम्। वधलिङ्गच्छेदयोस्तुल्यत्वाभिधानात्। अत्र प्रयोजकभेदस्यार्द्धं पादोनञ्च। | | | |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ। चूर्णौदानम्। | दक्षिणा। |
|---|---|---|---|---|
| वृषस्य स्वयं ब्राह्मणकर्त्तृकहलशकटादियोजनम्। | प्राजापत्यद्वयम्। | २ धेनू। | ६ कार्षापणाः। | यथाशक्ति। |
| योषिद्गवां ब्राह्मणकर्त्तृकहलशकटादियोजनम्। | ४ प्राजापत्यानि। ब्राह्मणेतरेषां प्राजापत्यद्वयम्। | ४ धेनवः। | १२ कार्षापणाः। | यथाशक्ति। |
| उत्सृष्टवृषस्य कपिलायाश्च ब्राह्मणकर्त्तृकहलशकटादियोजनम्। | यतिचान्द्रायणद्वयम्। ब्राह्मणेतरेषां यतिचान्द्रायणैकम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| गोमांसखादके गोविक्रयविनिमयादिः। | विक्रयादिमात्रे अज्ञानकृततत्तत्कर्त्तृकतत्तत्स्वामिकगववधप्रायश्चित्तार्द्धम्। गोमांसखादककर्त्तृकतद्गववधे तु अज्ञानकृततत्तत्कर्त्तृकतत्तत्स्वामिकगववधोक्तसंपूर्णप्रायश्चित्तम्। | | | |

अथ गोवधापवादः।

तत्र पराशरः।

"धूर्य्येषु वहमानेषु दण्डेनाभिहतेषु च। काष्ठेन लेष्टुना वापि पाषाणेन तु ताड़ितः॥ मूर्च्छितः पतितश्चैव मृतो वा सद्य एव च। सर्वगतानां धूर्य्याणां प्रवक्ष्यामि यथाविधि॥ उत्थितस्तु पदं गच्छेत् पञ्च सप्त दशापि वा। ग्रासं वा यदि गृह्णाति तोयं वा पिबति स्वयम्। पूर्व्वव्याधिविनष्टानां प्रायश्चित्तं न विद्यते॥" सम्वर्त्तः। "यन्त्रणे गोचिकित्सायां मूढ़गर्भविमोचने। यत्ने कृते विपत्तिः स्यात् प्रायश्चित्तं न विद्यते॥ औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु च। प्राणिनां प्राणरक्षार्थं प्रायश्चित्तं न विद्यते॥ दाहच्छेदशिराभेदप्रयत्नैरुपकुर्व्वताम्। द्विजानां गोहितार्थं वा प्रायश्चित्तं न विद्यते॥" याज्ञवल्क्यः। "क्रियमाणोपकारे तु मृते विप्रे न पातकम्। विपाके गोवृषाणाञ्च भेषजाग्निक्रियासु च॥" मिताक्षराधृतपराशरवचनम्। "कूपे खाते च धर्म्मार्थे गृहदाहे च ये मृताः। ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते॥" भवदेवभट्टधृतवचनम्। "शृङ्गभङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव। यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते॥" सम्वर्त्तः। "देवद्रोण्यां विहारे च कूपेष्वायतनेषु च। एषु गोषु प्रपन्नासु प्रायश्चित्तं न विद्यते॥" देवद्रोणी स्वयम्भूलिङ्गाद्यवस्थानगह्वरम्। विहारो गवां मैथुनम्। आयतनं सीमानिवन्धनस्थानम्। अत्र कूपायतनकर्त्तुर्दोषाभावो न तु गोस्वामिनः। इति प्रायश्चित्तविवेकप्रायश्चित्ततत्त्वस्मृतिसारमौर्खहसम्मतं गोवधप्रायश्चित्तं समाप्तम्॥ * ॥

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णौदानम्। | दक्षिणा। |
|---|---|---|---|---|
| ब्राह्मणक्षत्रियकर्त्तृकज्ञानकृतक्षत्रियवधः। | अज्ञानकृतब्रह्महत्याप्रायश्चित्तपादः। स तु त्रैवार्षिकव्रतरूपः। | ४५ धेनवः। | १३५ कार्षापणाः। | २५ गावः। अशक्तौ २५ कार्षापणाः। |
| ब्राह्मणक्षत्रियकर्त्तृकाज्ञानकृतक्षत्रियवधः। | सार्द्धवार्षिकव्रतम्। | सार्द्धद्वाविंशतिधेन्वसम्भवात् २३ धेनवः। | ६७॥० कार्षापणाः। | १३ गावः। अशक्तौ १२॥० कार्षापणाः। |
| वैश्यकर्त्तृकज्ञानकृतक्षत्रियवधः। | षाड़्वार्षिकव्रतम्। | ९० धेनवः। | २७० कार्षापणाः। | ५० गावः। अशक्तौ ५० कार्षापणाः। |
| वैश्यकर्त्तृकाज्ञानकृतक्षत्रियवधः। | त्रैवार्षिकव्रतम्। | ४५ धेनवः। | १३५ कार्षापणाः। | २५ गावः। अशक्तौ २५ कार्षापणाः। |
| शूद्रकर्त्तृकज्ञानकृतक्षत्रियवधः। | नववार्षिकव्रतम्। | १३५ धेनवः। | ४०५ कार्षापणाः। | ७५ गावः। अशक्तौ ७५ कार्षापणाः। |
| शूद्रकर्त्तृकाज्ञानकृतक्षत्रियवधः। | सार्द्धचतुर्वार्षिकव्रतम्। | सार्द्धसप्तषष्टिधेन्वसम्भवात् ६८ धेनवः। | २०२॥० कार्षापणाः। | ३८ गावः। अशक्तौ ३७॥० कार्षापणाः। |
| ब्राह्मणक्षत्रियवैश्यकर्त्तृकज्ञानकृतवैश्यवधः। | ब्रह्महत्याव्रताष्टमभागः। स च सार्द्धवार्षिकव्रतरूपः। | सार्द्धद्वाविंशतिधेन्वसम्भवात् २३ धेनवः। | ६७॥० कार्षापणाः। | १३ गावः। अशक्तौ १२॥० कार्षापणाः। |
| ब्राह्मणक्षत्रियवैश्यकर्त्तृकाज्ञानकृतवैश्यवधः। | ब्रह्महत्याव्रतषोड़शभागः। स च नवमासिकव्रतरूपः। | सपादैकादशधेन्वसम्भवात् १२ धेनवः। | ३३॥० कार्षापणाः। | ७ गावः। अशक्तौ ६।० कार्षापणाः। |

| अथानुपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| शूद्रकर्तृकज्ञानकृतवैश्यवधः। | ब्रह्महत्याव्रतचतुर्थभागः। स च त्रैवार्षिकव्रतरूपः। | ४५ धेनवः। | १३५ कार्षापणाः। | २५ गावः। अशक्तौ २५ कार्षापणाः। |
| शूद्रकर्तृकाज्ञानकृतवैश्यवधः। | ब्रह्महत्याव्रताष्टमभागः। स च सार्द्धवार्षिकव्रतरूपः। | सार्द्ध द्वाविंशतिधेन्वसम्भवात् २३ धेनवः। | ६७॥० कार्षापणाः। | १३ गावः। अशक्तौ १२॥० कार्षापणाः। |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्तृकज्ञानकृतशूद्रवधः। | ब्रह्महत्याव्रतषोड़शभागः। स च नवमासिकव्रतरूपः। | सपादैकादशधेन्वसम्भवात् १२ धेनवः। | ३३॥० कार्षापणाः। | ७ गावः। अशक्तौ ६।० कार्षापणाः। |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्तृकाज्ञानकृतशूद्रवधः। | ब्रह्महत्याव्रतद्वात्रिंशत्तमभागः। स च सार्द्धचतुर्मासिकव्रतरूपः। सर्व्वत्र बालवृद्धस्त्रीणामर्द्धम्। एकस्य बालत्वादिधर्म्मद्वयवत्त्वे पादः। | पादार्द्धाधिकसार्द्ध पञ्चधेन्वसम्भवात् ६ धेनवः। | १६॥≈० कार्षापणाः। | ४ गावः। अशक्तौ ३≈० कार्षापणाः। |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्तृकज्ञानकृतवृत्तिस्थशूद्रवधः। | ब्रह्महत्याव्रतद्वादशभागः। स च वार्षिकव्रतरूपः। अज्ञानतस्त्वेतदर्द्धम्। | १५ धेनवः। | १५ कार्षापणाः। | ६ गावः। अशक्तौ ८।≈६॥= कार्षापणाः। |
| सर्व्ववर्णकर्तृकज्ञानकृतप्रतिलोमजातवधः अर्थात् अपकृष्टशूद्रवधः। | चान्द्रायणव्रतम्। | सार्द्ध सप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| सर्व्ववर्णकर्तृकाज्ञानकृतापकृष्टशूद्रवधः। | पराकव्रतम्। सर्व्वत्र बालवृद्धस्त्रीणामर्द्धम्। एकस्य बालत्वादिधर्म्मद्वयवत्त्वे पादः। | ५ धेनवः। | १५ कार्षापणाः। | यथाशक्ति। |
| ब्राह्मणकर्तृकज्ञानकृतब्राह्मणीवधः। | षाड़्वार्षिकं महाव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। | ६० धेनवः। | २७० कार्षापणाः। | ५० गावः। ५० कार्षापणा वा। |
| क्षत्रियकर्तृकज्ञानकृतब्राह्मणीवधः। | द्वादशवार्षिकव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। | १८० धेनवः। | ५४० कार्षापणाः। | १०० गावः। १०० कार्षापणा वा। |
| वैश्यकर्तृकज्ञानकृतब्राह्मणीवधः। | अष्टादशवार्षिकव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। | २७० धेनवः। | ८१० कार्षापणाः। | १५० गावः। १५० कार्षापणा वा। |
| शूद्रकर्तृकज्ञानकृतब्राह्मणीवधः। | चतुर्व्विंशतिवार्षिकव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। सर्व्वत्र बालवृद्धस्त्रीणामर्द्धम्। एकस्य बालत्वादुभयधर्म्मवत्त्वे पादः। | ३६० धेनवः। | १०८० कार्षापणाः। | २०० गावः। अशक्तौ २०० कार्षापणाः। |
| ब्राह्मणक्षत्रियकर्तृकज्ञानकृतचत्रियावधः। | त्रैवार्षिकव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। | ४५ धेनवः। | १३५ कार्षापणाः। | २५ गावः। २५ कार्षापणा वा। |
| वैश्यकर्तृकज्ञानकृतचत्रियावधः। | षाड़्वार्षिकव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। | ६० धेनवः। | २७० कार्षापणाः। | ५० गावः। ५० कार्षापणा वा। |
| शूद्रकर्तृकज्ञानकृतचत्रियावधः। | नववार्षिकव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। सर्व्वत्र बालवृद्धस्त्रीणामर्द्धम्। एकस्य बालत्वादुभयधर्म्मवत्त्वे पादः। | १३५ धेनवः। | ४०५ कार्षापणाः। | ७५ गावः। अशक्तौ ७५ कार्षापणाः। |
| ब्राह्मणक्षत्रियवैश्यकर्तृकज्ञानकृतवैश्यावधः। | वार्षिकव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। | १५ धेनवः। | ४५ कार्षापणाः। | ६ गावः। ८।≈६॥ कार्षापणा वा। |
| शूद्रकर्तृकज्ञानकृतवैश्यावधः। | द्विवार्षिकव्रतम्। अज्ञानतस्त्वेतदर्द्धम्। स्त्रीबालवृद्धानामर्द्धम्। एकस्य स्त्रीत्वादुभयधर्म्मवत्त्वे पादः। | ३० धेनवः। | ६० कार्षापणाः। | १७ गावः। अशक्तौ १६॥≈१३॥ कार्षापणाः। |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्तृकशूद्रावधः। | वार्षिकव्रतम्। अज्ञानतस्तु एतदर्द्धम्। स्त्रीबालवृद्धानामर्द्धम्। एकस्य स्त्रीत्वादुभयधर्म्मवत्त्वे पादः। | १५ धेनवः। | ४५ कार्षापणाः। | ६ गावः। अशक्तौ ८।≈६॥ कार्षापणाः। |
| आत्रेयीवधः। आत्रेयी त्रिविधा। अग्निगोत्रा ऋतुस्नाता गर्भिणी च। | यत्कर्तृकयद्वर्णस्त्रीवधे यत्प्रायश्चित्तं तद्द्विगुणम्। | | | |

| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| ब्राह्मणकर्तृकाज्ञानकृतसकृत्सवर्णव्यभिचरितब्राह्मणीवधः। | वार्षिकव्रतम् । अज्ञानतश्चैतदर्द्धम् । | १५ धेनवः | ४५ कार्षापणाः । | ६ गावः। अशक्तौ ८।८६॥ कार्षापणाः। |
| क्षत्रियकर्तृकाज्ञानकृतसकृत्सवर्णव्यभिचरितब्राह्मणीवधः। | द्विवार्षिकव्रतम् । अज्ञानतश्चैतदर्द्धम् । | ३० धेनवः। | ६० कार्षापणाः। | १७ गावः। अशक्तौ १६॥८१३॥ कार्षापणाः। |
| वैश्यकर्तृकाज्ञानकृतसकृत्सवर्णव्यभिचरितब्राह्मणीवधः। | त्रैवार्षिकव्रतम् । अज्ञानतश्चैतदर्द्धम् । | ४५ धेनवः। | १३५ कार्षापणाः। | २५ गावः। अशक्तौ २५ कार्षापणाः। |
| शूद्रकर्तृकाज्ञानकृतसकृत्सवर्णव्यभिचरितब्राह्मणीवधः। | चतुर्वार्षिकव्रतम् । अज्ञानतश्चैतदर्द्धम् । बालवृद्धस्त्रीणामर्द्धम् । एकस्य उभयधर्म्मवत्त्वे पादः । | ६० धेनवः। | १८० कार्षापणाः। | ३४ गावः। अशक्तौ ३३।८६॥ कार्षापणाः। |
| ब्राह्मणकर्तृकाज्ञानकृतो भूयो व्यभिचरितायाः अधमवर्णव्यभिचरितायाश्च ब्राह्मण्या वधः। | दृतिदानम् । ज्ञानकृते तु द्वैगुण्यम् । क्षत्रियस्य एतद्द्विगुणम् । वैश्यस्य त्रिगुणम् । शूद्रस्य चतुर्गुणम् । | ० | ० | यथाशक्ति। |
| ब्राह्मणक्षत्रियकर्तृकाज्ञानकृतो भूयो व्यभिचरिताया अधमवर्णव्यभिचरितायाश्च क्षत्रियाया वधः। | धनुर्दानम् । कामतो द्वैगुण्यम् । वैश्यस्य एतद्द्विगुणम् । शूद्रस्य त्रिगुणम् । | ० | ० | यथाशक्ति। |
| ब्राह्मणक्षत्रियवैश्यकर्तृकाज्ञानकृतो भूयो व्यभिचरिताया अधमवर्णव्यभिचरितायाश्च वैश्याया वधः। | छागदानम् । कामतश्चैतद्द्विगुणम् । शूद्रस्य एतद्द्विगुणम् । | ० | ० | यथाशक्ति। |
| ब्राह्मणक्षत्रियवैश्यशूद्रकर्तृकाज्ञानकृतो भूयो व्यभिचरिताया अधमवर्णव्यभिचरितायाश्च शूद्राया वधः। | मेषदानम् । ज्ञानतो द्वैगुण्यम् । सर्व्वत्र स्त्रीबालवृद्धानामर्द्धम् । एकस्य उभयधर्म्मवत्त्वे पादः । प्रयोजकादीनां पादपादहानिः । | ० | ० | यथाशक्ति। |
| ब्राह्मणकर्तृकाज्ञानकृतब्राह्मणीगर्भवधः। | द्वादशवार्षिकव्रतम् । अज्ञानतोऽर्द्धम् । | १८० धेनवः। | ५४० कार्षापणाः। | १०० गावः। अशक्तौ १०० कार्षापणाः। |
| ब्राह्मणकर्तृकाज्ञानकृतक्षत्रियागर्भवधः। | त्रैवार्षिकव्रतम् । अज्ञानतोऽर्द्धम् । | ४५ धेनवः। | १३५ कार्षापणाः। | २५ गावः। अशक्तौ २५ कार्षापणाः। |
| ब्राह्मणकर्तृकाज्ञानकृतवैश्यागर्भवधः। | सार्द्धवार्षिकव्रतम् । अज्ञानतोऽर्द्धम् । | सार्द्धद्वाविंशतिधेन्वसम्भवात् २३ धेनवः। | ६७॥० कार्षापणाः। | १३ गावः। अशक्तौ १२॥० कार्षापणाः। |
| ब्राह्मणकर्तृकाज्ञानकृतशूद्रागर्भवधः। | नवमासिकव्रतम् । अज्ञानतोऽर्द्धम् । | सपादैकादशधेन्वसम्भवात् १२ धेनवः। | ३३॥० कार्षापणाः। | ७ गावः। अशक्तौ ६।० कार्षापणाः। |
| क्षत्रियकर्तृकाज्ञानकृतब्राह्मणीगर्भवधः। | चतुर्विंशतिवार्षिकव्रतम् । अज्ञानतोऽर्द्धम् । | ३६० धेनवः। | १०८० कार्षापणाः। | २०० गावः। अशक्तौ २०० कार्षापणाः। |
| क्षत्रियकर्तृकाज्ञानकृतक्षत्रियागर्भवधः। | त्रैवार्षिकव्रतम् । अज्ञानतोऽर्द्धम् । | ४५ धेनवः। | १३५ कार्षापणाः। | २५ गावः। अशक्तौ २५ कार्षापणाः। |
| क्षत्रियकर्तृकाज्ञानकृतवैश्यागर्भवधः। | सार्द्धवार्षिकव्रतम् । अज्ञानतोऽर्द्धम् । | सार्द्धद्वाविंशतिधेन्वसम्भवात् २३ धेनवः। | ६७॥० कार्षापणाः। | १३ गावः। अशक्तौ १२॥० कार्षापणाः। |
| क्षत्रियकर्तृकाज्ञानकृतशूद्रागर्भवधः। | नवमासिकव्रतम् । अज्ञानतोऽर्द्धम् । | सपादैकादशधेन्वसम्भवात् १२ धेनवः। | ३३॥० कार्षापणाः। | ७ गावः। अशक्तौ ६।० कार्षापणाः। |
| वैश्यकर्तृकाज्ञानकृतब्राह्मणीगर्भवधः। | षट्त्रिंशद्वार्षिकव्रतम् । अज्ञानतोऽर्द्धम् । | ५४० धेनवः। | १६२० कार्षापणाः। | ३०० गावः। अशक्तौ ३०० कार्षापणाः। |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| वैश्यकर्त्तृकज्ञानकृतक्षत्रियागर्भवधः। | षाड्वार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। | ९० धेनवः। | २७० कार्षापणाः। | ५० गावः। अशक्तौ ५० कार्षापणाः। |
| वैश्यकर्त्तृकज्ञानकृतवैश्यागर्भवधः। | सार्द्धवार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। | सार्द्धद्वाविंशतिधेन्वसम्भवात् २३ धेनवः। | ६७॥० कार्षापणाः। | १३ गावः। अशक्तौ १२॥०, कार्षापणाः। |
| वैश्यकर्त्तृकज्ञानकृतशूद्रागर्भवधः। | नवमासिकव्रतम्। अज्ञानतोऽर्द्धम्। | सपादैकादशधेन्वसम्भवात् १२ धेनवः। | ३३॥० कार्षापणाः। | ७ गावः। अशक्तौ ६।० कार्षापणाः। |
| शूद्रकर्त्तृकज्ञानकृतब्राह्मणीगर्भवधः। | अष्टचत्वारिंशद्वार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। | ७२० धेनवः। | २१६० कार्षापणाः। | ४०० गावः। अशक्तौ ४०० कार्षापणाः। |
| शूद्रकर्त्तृकज्ञानकृतक्षत्रियागर्भवधः। | नववार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। | १३५ धेनवः। | ४०५ कार्षापणाः। | ७५ गावः। अशक्तौ ७५ कार्षापणाः। |
| शूद्रकर्त्तृकज्ञानकृतवैश्यागर्भवधः। | त्रैवार्षिकव्रतम्। अज्ञानतोऽर्द्धम्। | ४५ धेनवः। | १३५ कार्षापणाः। | २५ गावः। अशक्तौ २५ कार्षापणाः। |
| शूद्रकर्त्तृकज्ञानकृतशूद्रागर्भवधः। | नवमासिकव्रतम्। अज्ञानतोऽर्द्धम्। ब्राह्मण्यादिगर्भे पुंस्त्वेन ज्ञाते विशेषेणाज्ञाते चोक्तं प्रायश्चित्तम्। स्त्रीत्वेन ज्ञाते सर्व्वत्रार्द्धं प्रायश्चित्तं ज्ञेयम्। सर्व्वत्र स्त्रीबालवृद्धानामर्द्धम्। प्रयोजकादीनां पादपादहानिः। | सपादैकादशधेन्वसम्भवात् १२ धेनवः। | ३३॥० कार्षापणाः। | ७ गावः। अशक्तौ ६।० कार्षापणाः। |
| यद्यपि गवाश्वादिवधः सङ्करीकरणपापमिदं तथापि हिंसासाजात्यादुपपातकप्रकरणे तत्प्रायश्चित्तं निरूप्यते। | | | | |
| वृथासामान्यपशुघातः। वृथेतिग्रहणात् यागाद्यर्थे प्रायश्चित्ताद्यभावः। | प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| राजसम्भ्युत्तमगजवधः। | पञ्चनीलवृषदानम्। | ० | २५ कार्षापणाः। | यथाशक्ति। |
| अत्यन्तोत्तमवाजिरासभवधः। | चान्द्रायणम्। | ८ धेनवः। सार्द्धसप्तधेन्वसम्भवात्। | २२॥० कार्षापणाः। | यथाशक्ति। |
| अश्ववधः। | वासोयुगदानम्। एतच्च ज्ञानतः। अज्ञानतस्तदर्द्धम्। | ० | ० | यथाशक्ति। |
| मृगमहिषवराहकुञ्जरगण्डतरक्षुऋक्षवानरसिंहव्याघ्रपृषतचमरशशकादीनां वधः। | अहोरात्रोपवासान्ते घृतघटदानम्। एतच्चाज्ञानतः सकृद्वधविषयम्। ज्ञानतो द्वैगुण्यम्। | ० | उपवासासामर्थ्ये। अष्ट पणाः। | यथाशक्ति। |
| अजाव्यादिवधः। | त्रिरात्रोपवासः। एतदज्ञानतोऽत्यन्तधार्म्मिकब्राह्मणकर्त्तृकसकृद्वधे वेदितव्यम्। | ० | १॥० कार्षापणः। | हिरण्यं वस्त्रं वा। |
| | शक्तस्य एकहायनवृषदानम्। | ० | वृषमूल्यम् ५ कार्षापणाः। | यथाशक्ति। |
| | अशक्तस्य धेनुदानम्। तदशक्तौ प्राजापत्यव्रतम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| | अभ्यासे मासं यावकपानम्। | २ धेनू। | ६ कार्षापणाः। | यथाशक्ति। |
| | अत्यन्ताभ्यासे कृच्छ्रातिकृच्छ्रम्। | ४ धेनवः। | १२ कार्षापणाः। | यथाशक्ति। |
| मार्जारगोधानकुलमण्डूकश्वपतन्निर्विषकसर्पवधः। पतत्री गृहपक्षी। | त्र्यहं क्षीरपानम्। पादिककृच्छ्रं वा। एतत् सकृदज्ञानविषयम्। | ० | १ कार्षापणाः। | यथाशक्ति। |
| | ज्ञानतोऽभ्यासे द्वादशरात्रं कृच्छ्रम्। स्त्रीशूद्रबालवृद्धानामर्द्धम्। | यत्किञ्चिदधिकसपादधेन्वसम्भवात् २ धेनू। | ४ कार्षापणाः। | यथाशक्ति। |

| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| | कृष्णसर्पवधे तीक्ष्णाग्रलौहकीलिकादानमादौ कर्त्तव्यम् । सर्पजातीयषण्ढवधे पलालभारः सीसकमाषश्च दातव्यः । एतज्ज्ञानतः । एतदशक्तौ व्रतादिकं कर्त्तव्यम् । | | | |
| अथ सामान्यपक्षिवधः । | नक्तव्रतम् । द्विरक्तिपरिमितरौप्यदानं वा । | ० | ≈१३।– पणौ । नक्तव्रतस्योपवासतृतीयभागत्वात् । | यथाशक्ति । |
| | कामतोऽत्यन्ताभ्यासे शूद्रहत्याव्रतम् । गुरुगोवधव्रतं वा । स्त्रीशूद्रबालवृद्धानामर्द्धम् । एकस्य स्त्रीत्वाद्युभयधर्म्मवत्त्वे पादः । | १२ धेनवः । | ३६ कार्षापणाः । | ७ गावः । अशक्तौ ६।० कार्षापणाः । |
| अथ विशेषपक्षिवधः । बकबलाका-हंससारसकारण्डवचक्रवाककुररगृध्रश्येनखञ्जरीटटिट्टिभोलूक-शुकशारिकातित्तिरिमयूरकाककलविङ्कचालङ्कमद्गुकपोतपारावतादीनां वधः । | अहोरात्रोपवासः सर्व्वबीजदानञ्च । एतदज्ञानविषयम् । | ० | उपवासानुकल्पः ॥० पणाः । सर्व्वबीजमूल्यम् ।० पणाः । | यथाशक्ति । |
| | ज्ञानकृते त्र्यहोपवासः । शक्तस्य गोदानम् । तत्रायं विशेषः । शुकवधे द्विहायनगवदानम् । क्रौञ्चवधे त्रिहायणगवदानम् । क्रौञ्चशुकभासमयूरश्येनगृध्रवधे वत्सतरीदानम् । अत्र वृषदानवत्सतरीदानयोर्व्यवस्था शक्ताशक्तविषयिका । एतद्दानाशक्तानां व्रतादिकम् । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| कोकिलशुककपोतकपिञ्जलकुक्कुटटिट्टिभखर्ज्जूरखञ्जरीटानां पुरुषभारपरिमितानां वधः । | उत्तृष्टशूद्रहत्याव्रतम् । | १५ धेनवः । | ४५ कार्षापणाः । | ६ गावः । अशक्तौ ७।८६॥ कार्षापणाः । |
| मत्स्यमण्डूकमकरशिशुमारादिजलचरवधः । | सप्तरात्रब्रह्महत्याव्रतम् । एतदज्ञानतः सकृद्वधे । | ० | १ कार्षापणः । | ≈११॥– पणौ । |
| | अहोरात्रोपवासः यथाशक्तिलवणदानञ्च । एतत् कामतः सकृत् । अभ्यासात्यन्ताभ्यासयोस्तु मत्स्यवधप्रायश्चित्ते दर्शयिष्यते । | ० | ॥० पणाः उपवासानुकल्पः । १॥० कार्षापणः लवणमूल्यम् ।२। | ।८३॥ = पणाः । |
| अथ सास्थ्यनस्थिप्राणिवधः । | | | | |
| सहस्रसंख्यकानां अस्थिमतां कृकलासादीनां ज्ञानकृतवधः । | आब्दिकं शूद्रहत्याव्रतम् । अज्ञाने षाण्मासिकम् । | १५ धेनवः । | ४५ कार्षापणाः । | ६ गावः । अशक्तौ ७।८६॥ कार्षापणाः । |
| अनस्थां कृमिकीटपतङ्गभ्रमरदंशमशकमक्षिकादीनां शकटपूरितमितानां ज्ञानकृतवधः । | आब्दिकं शूद्रहत्याव्रतम् । अज्ञाने षाण्मासिकम् । | १५ धेनवः । | ४५ कार्षापणाः । | ६ गावः । अशक्तौ ७।८६॥ कार्षापणाः । |
| अस्थिमतां प्रत्येकं वधः । | पणदानम् । | ० | ० | यत्किञ्चित् । |
| अनस्थां प्रत्येकं वधः । | प्राणायामः । पणदानं वा । | ० | ० | तथा । |
| अन्नशकटादिगुडादिसर्व्वरसफलपुष्पजातप्राणिवधः । | दिनमेकं घृतमात्रभोजनम् । एतदज्ञाने । ज्ञाने तद्द्विगुणम् । | ० | ॥० पणाः । | यथाशक्ति । |
| | अभ्यासे तप्तकृच्छ्रम् । | ४ धेनवः । | १२।० कार्षापणाः । | यथाशक्ति । |
| | अत्यन्ताभ्यासे कृच्छ्रातिकृच्छ्रम् । | ६ धेनवः । | १८ कार्षापणाः । | यथाशक्ति । |
| फलवद्वृक्षलतागुल्मच्छेदनम् । | प्राजापत्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| अफलवतामेतेषां छेदनम्। | अष्टाहसाध्यऋृद्धकृच्छ्रम्। | ० | २ कार्षापणौ। | यथाशक्ति। |
| अत्यन्तोत्कृष्टफलवद्वृक्षच्छेदनम्। | चान्द्रायणम्। | ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| अभ्यासादत्यन्तोत्कृष्टफलवद्वृक्षच्छेदनम्। | आब्दिकव्रतम्। | १५ धेनवः। | ४५ कार्षापणाः। | ६ गावः। अशक्तौ ८।८६॥ कार्षापणाः। |
| चैत्यवृक्षश्मशानसीमपुण्यस्थानसुरालयजातवृक्षच्छेदनम्। त्रिंशतिसंख्यकोपजीव्यवृक्षच्छेदनम्। ख्यातवृक्षच्छेदनञ्च। | पूर्व्वोक्तवृक्षच्छेदनप्रायश्चित्तद्विगुणादि। सर्व्वत्र स्त्रीशूद्रबालवृद्धानामर्द्धम्। | | | |
| वापीकूपारामसेतुसभातडागवप्रदेवतायतनभेदनम्। | ब्राह्मणेभ्यो निवेद्य चतस्र आहुतीर्जुहुयात्। इदं विष्णुरिति प्रथमां मानस्तोके इति द्वितीयां विष्णोः कर्म्माणीति तृतीयां पादोऽस्यान्यामिति चतुर्थीं यां देवतामुत्सादयति तस्यै देवतायै। ब्राह्मणान् भोजयेत्। एतत् सकृदल्पोपघातविषयम्। अभ्यासे महोपघाते च प्राजापत्यम्। दण्डश्च। यथा। सकृदल्पोपघाते प्रथमसाहसः २५० पणाः। अभ्यासे महोपघाते उत्तमसाहसः। १००० पणाः। | | | |
| देवताया उत्कृष्टप्रतिमाभेदनच्छेदनदहनहरणानि। | चान्द्रायणम्। वाप्यादिभेदनोक्ताश्चतस्र आहुतयः। उत्तमसाहसो दण्डश्च। १००० पणाः। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| देवताया अपकृष्टप्रतिमाभेदनच्छेदनदहनहरणानि। | प्राजापत्यम्। पूर्व्वोक्तचतुराहुत्यादिदानम्। प्रथमसाहसो दण्डश्च। २५० पणाः। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| अथाभिचारः। स तु परहिंसार्थं जपहोमादिकर्म्म। | अतिकृच्छ्रम्। एतत् सकृदाचरणे। अभ्यासे प्रायश्चित्तावृत्तिः। इति हिंसाप्रायश्चित्तम् ॥ ❋ ॥ | ३ धेनवः। | ९ कार्षापणाः। | यथाशक्ति। |
| व्रात्ययाजनम्। | प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| मूल्येन मृतस्य दहनवहनादिकम्। | सान्तपनम्। | २ धेनू। | ६ कार्षापणाः। | यथाशक्ति। |
| अथाभक्ष्यभक्षणम्। अभक्ष्यं षड्विधम्। जातिदुष्टम् १ क्रियादुष्टम् २ कालाश्रयविदूषितम् ३ संसर्गाश्रयदुष्टम् ४ सहृल्लेखम् ५ स्वभावतो दुष्टम् ६। जातिदुष्टं लशुनगृञ्जनपलाण्डुच्छत्राकश्वेतवार्त्ताकीलालिकावर्त्तुलाकारालाबूरूपम् १ क्रियादुष्टं पतितसंस्पृष्टम् २ कालदुष्टं त्यक्तं चिरसंस्थितञ्च ३ संसर्गदुष्टं सुरालशुनपेयूषादियुक्तम् ४ सहृल्लेखं विचिकित्सितान्नम् ५ स्वभावदुष्टं पुरीषादि ६। | चान्द्रायणम्। एतद्गुरुतरविषयम्। विशेषानिर्द्देशे ज्ञेयम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |

| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| अपरञ्च । संघातान्नम् । शूद्रोपनीतान्नम् । पतितोपनीतान्नम् । शूद्रवेश्मस्थान्नञ्च । | | | | |
| शूद्रस्य पक्वान्नभक्षणम् । | ब्राह्मणस्य त्र्यहोपवासः । एतदज्ञानतः । | १ धेनुः । अर्द्धधेन्वसम्भवात् । | १॥० कार्षापणः । | यथाशक्ति । |
| | ज्ञानतः प्राजापत्यम् । आपदि भक्षणे मनस्तापः द्रुपदां शतजपो वा । क्षत्रियादीनां पादपादह्रानिः । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| अभ्यासात् शूद्रस्य पक्वान्नभक्षणम् । | ब्राह्मणस्य मासयावकपानम् । | २ धेनू । | ६ कार्षापणाः । | यथाशक्ति । |
| | क्षत्रियादीनां पादपादह्रानिः । | | | |
| शूद्रस्यामान्नभक्षणम् । | उक्तप्रायश्चित्ततुरीयभागः । आपदि भक्षणे प्रायश्चित्ताभावः । | | | |
| अथ रजकशैलूषवेणुचर्म्मोपजीविकैवर्त्ताद्यन्त्यजान्नभक्षणम् । | चान्द्रायणम् । एतत् ज्ञानाभ्यासविषयम् । अज्ञाने तदर्द्धम् । | ८ धेनवः । सार्द्धसप्तधेन्वसम्भवात् । | २२॥० कार्षापणाः । | यथाशक्ति । |
| | ज्ञानतोऽत्यथाभ्यासे कृच्छ्राब्दव्रतम् । | ३० धेनवः । | ६० कार्षापणाः । | १७ गावः । अशक्तौ १६॥*१६॥ कार्षापणाः । |
| | अज्ञानतोऽत्यथाभ्यासे एतदर्द्धम् । एतत्तु ब्राह्मणविषयम् । क्षत्रियादीनां पादपादह्रानिः । | १५ धेनवः । | ४५ कार्षापणाः । | ६ गावः । अशक्तौ ८।*८॥ कार्षापणाः । |
| सकृदज्ञानकृतान्त्यजोत्कृष्टाशनम् । | ब्राह्मणस्य चान्द्रायणम् । | ८ धेनवः । | २२॥०कार्षापणाः । | यथाशक्ति । |
| | क्षत्रियस्य तप्तकृच्छ्रम् । | ४ धेनवः । | १२ कार्षापणाः । | यथाशक्ति । |
| | वैश्यस्य तप्तकृच्छ्रार्द्धम् । | २ धेनू । | ६ कार्षापणाः । | यथाशक्ति । |
| | शूद्रस्य तप्तकृच्छ्रपादः । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | ज्ञानत एतद्द्वैगुण्यम् । | | | |
| कापालिकान्नभक्षणम् । | ज्ञानात् कृच्छ्राब्दम् । | ३० धेनवः । | ६० कार्षापणाः । | १७ गावः । अशक्तौ १६॥*१६॥ कार्षापणाः । |
| | अज्ञानात् चान्द्रायणद्वयम् । एतदत्यथाभ्यस्तविषयम् । एतत् सर्व्वं ब्राह्मणस्य । क्षत्रियादौ पादपादह्रानिः । | १५ धेनवः । | ४५ कार्षापणाः । | यथाशक्ति । |
| चाण्डालश्वपचक्षत्तृसूतवैदेहकमागधायोगवानामन्त्यावसायिनामन्नभक्षणम् । | ब्राह्मणस्य कामतः सकृद्भोजने चान्द्रायणम् । | ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| | अज्ञानतस्तप्तकृच्छ्रम् । | ४ धेनवः । | १२ कार्षापणाः । | यथाशक्ति । |
| | बलाद्भोजने पराकः । | ५ धेनवः । | १५ कार्षापणाः । | यथाशक्ति । |
| | अज्ञानतोऽत्यचत्वारिंशद्वारभोजने द्वादशवार्षिकव्रतम् । ज्ञानतश्चतुर्विंशतिवारभोजने एतदेव । | १८० धेनवः । | ५४० कार्षापणाः । | १०० गावः । अशक्तौ १०० कार्षापणाः । |
| | ज्ञानतोऽत्यचत्वारिंशद्द्वारभोजने चतुर्व्विंशतिवार्षिकव्रतं अव्यवहार्य्यता च । | ३६० धेनवः । | १०८० कार्षापणाः । | २०० गावः । अशक्तौ २०० कार्षापणाः । |
| | सकृदज्ञानत आमान्नभोजने त्रिरात्रोपवासः । सर्व्वत्र क्षत्रियादीनां पादपादह्रानिः । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | आपदि पक्वान्नभोजने क्षत्रियस्य सान्तपनम् । | २ धेनू । | ६ कार्षापणाः । | यथाशक्ति । |
| | वैश्यस्य षड्रात्रम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | शूद्रस्य त्रिरात्रम् । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| चाण्डालपतितादीनामुत्कृष्टान्नभक्षणम् । | द्विजस्य पराकः । | ५ धेनवः । | १५ कार्षापणाः । | यथाशक्ति । |
| | शूद्रस्य कृच्छ्रम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | एतत् सकृदज्ञानविषयं ज्ञानतो द्वैगुण्यादिकम् । | | | |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| अथ सामान्याभोज्यान्नभोजनम्। | त्र्यहोपवासः। एतत् सकृदज्ञानविषयम्। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | ज्ञाने प्राजापत्यम्। क्षत्रियादीनां पादपादह्रानिः। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| अभोज्यान्नानि यथा। अनधीतवेदारब्धयज्ञान्नम्। ग्रामयाजिहोत्रकयज्ञान्नम्। स्त्रीक्लीबहुतयज्ञान्नम्। मत्तक्रुद्धातुराणामन्नम्। केशेन कीटेन वा सह पक्वमन्नम्। कामतः पादस्पृष्टमन्नम्। भ्रूणघ्नादिपतितावेक्षितान्नम्। रजस्वलास्पृष्टान्नम्। पतत्रिणावलीढमन्नम्। शुना स्पृष्टमन्नम्। गवाघ्रातमन्नम्। घुष्टान्नम्। घोषणया दत्तमन्नमित्यर्थः। गणान्नम्। मठब्राह्मणसंघान्नमित्यर्थः। गणिकान्नम्। विद्वज्जुगुप्सितान्नम्। स्तेनान्नम्। गायनान्नम्। तक्षान्नम्। वार्द्धुषिकान्नम्। दीक्षितान्नम्। दीक्षणीययागानन्तरं यज्ञसमाप्तिपर्य्यन्तं तद्यागकर्त्तुरन्नमित्यर्थः। कदर्य्यस्यान्नम्। रज्ज्वादिना बद्धस्यान्नम्। अयोनिगडयुक्तस्यान्नम्। अभिशस्तस्यान्नम्। क्लीबान्नम्। पुंश्चल्यन्नम्। दाम्भिकान्नम्। छद्मना धर्म्मचारिणोऽन्नमित्यर्थः। शुक्तान्नम्। पर्य्युषितान्नम्। शूद्रोच्छिष्टान्नम्। चिकित्सकान्नम्। व्याधान्नम्। क्रूरान्नम्। उच्छिष्टभोजिनामन्नम्। उग्रस्यान्नम्। दारुणकर्म्मणो जातिविशेषस्य वा अन्नमित्यर्थः। सूतिकोद्देशेन पक्वमन्नम्। पर्य्याचान्तम्। आचमनव्यवहितान्नमित्यर्थः। एकपंक्तिस्थानन्यानवमन्य यत्रान्ने भुज्यमाने केनचिदाचमनं क्रियते तत् पर्य्याचान्तमिति कुल्लूकभट्टः। अनर्च्चितान्नम्। अर्चार्हस्यावज्ञया दत्तमन्नमित्यर्थः। वृथामांसम्। अवीरान्नम्। द्विषदन्नम्। नगराधिपान्नम्। | एतेषामभोज्यानामन्यतमानां भक्षणे पूर्व्वोक्तत्र्यहोपवासः। एष सकृदज्ञानविषयः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | ज्ञाने प्राजापत्यम्। क्षत्रियादीनां पादपादह्रानिः। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |

| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| पतितान्नम् । अवक्षुतान्नम् । सकेशसहितान्नमित्यर्थः । पिशुनान्नम् । अनृतिनामन्नम् । कूटसाक्ष्याद्यन्नमित्यर्थः । यज्ञफलविक्रायकान्नम् । शैलूषान्नम् । तुन्नवायान्नम् । कृतघ्नान्नम् । कर्म्मारान्नम् । निषादान्नम् । रङ्गावतारकान्नम् । स्वर्णकारान्नम् । वेणुजीविनामन्नम् । लौहविक्रायकान्नम् । श्ववतामन्नम् । आखेटकाद्यर्थं शुनः पोषकाणामन्नमित्यर्थः । शौण्डिकवृत्तिद्विजान्नम् । चैलनिर्णेजकस्यान्नम् । वस्त्रधावकस्यान्नमित्यर्थः । रञ्जकान्नम् । कुसुम्भादिना वस्त्ररागकारकस्यान्नमित्यर्थः । नृशंसान्नम् । गृहस्थितोपपतिकान्नम् । उपपतिमर्षकान्नम् । गेहे ज्ञातं भार्य्याजारं ये सहन्ते तेषामन्नमित्यर्थः । स्त्रीजितान्नम् । अनिर्द्दशं प्रेतान्नम् । अनिर्गताशौचस्य सूतिकान्नमित्यर्थः । अतुष्टिकरान्नञ्च ॥७०॥ | एतेषामभोज्यानामन्यतमानां भक्षणे पूर्ब्बोक्तस्त्र्यहोपवासः । एष सकृदज्ञानविषयः । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | ज्ञाने प्राजापत्यम् ।<br>क्षत्रियादीनां पादपादहानिः । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| चाण्डालादिपतितस्पृष्टान्नभक्षणम् ।<br>अत्र पतितपदं सर्व्वधर्म्मबहिष्कृतवाचि यवनादिम्लेच्छपरं उच्छिष्टान्नभोजनप्रकरणे तथा लिखनात् अतएव चाण्डालस्पृष्टान्नभक्षणप्रतिज्ञायां पतितपदं पृथक् न लिखितम् । | प्राजापत्यम् । एतत्सकृदज्ञाने ब्राह्मणविषयम् ।<br>ज्ञाने द्वैगुण्यम् ।<br>अभ्यासे तु प्रायश्चित्तावृत्तिः ।<br>क्षत्रियादीनां पाद-पादहानिः ।<br>एतत्कुक्कुर्य्यादिष्वभ्यासे ज्ञेयम् ।<br>रजकादिस्पृष्टान्नभक्षणे तु एतदर्द्धम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| पतितस्पर्शे अकृतस्नातस्य भोजनम् । | याज्ञवल्क्योक्तचतुरहःसाध्यं तप्तकृच्छ्रम् । | सपादधेन्वसम्भवात् २ धेनू । | ३॥० कार्षापणाः । | यथाशक्ति । |
| | अज्ञानत एतदर्द्धम् । अभ्यासे प्रायश्चित्तावृत्तिः । | | | |
| | अत्यन्ताभ्यासे चान्द्रायणम् ।<br>क्षत्रियादीनां पादपादहानिः । चाण्डालादिस्पर्शे एतद्बोधितव्यम् । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| शूद्रादिस्पृष्टान्नस्य केशकीटोपहतान्नस्य च भक्षणम् । | एकोपवासः । | ० | ॥० पणाः । | यथाशक्ति । |
| वृथापाकान्नभक्षणम् । तत्तु देवतापितृतिथिभक्षणवर्जितान्नम् । | प्राणायामत्रयम् घृतमात्रभोजनञ्च । एतदज्ञानतः । ज्ञानतो द्वैगुण्यम् । | ० | ॥० पणाः । | यथाशक्ति । |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| वृथामांसभक्षणम्। तत्तु पितृदेवार्चनरहितं मांसम्। | प्राजापत्यव्रतम्। एतद्ब्राह्मणस्य।<br>क्षत्रियादीनां पादपादहानिः।<br>अभ्यासे प्राजापत्यावृत्तिः।<br>एतत् रोगिदैवपितृकर्म्मनिमन्त्रितेतर-विषयम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| सामान्याभक्ष्यमांसभक्षणम्। | सप्तरात्रयवागूपानम्।<br>एतत् सकृदज्ञाने। ज्ञानतो द्वैगुण्यम्।<br>क्षत्रियादीनां पादपादहानिः।<br>एतदभ्यासे प्रायश्चित्तावृत्तिः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| अश्वगोकुञ्जरोष्ट्रशशकादिपञ्च-नखातिरिक्तपञ्चनखक्रव्याद्-ग्राम्यकुक्कुटानां मांसभक्ष-णम्। विड्वराहनरमांस-भक्षणञ्च। | ब्राह्मणानां सकृदज्ञानतः प्राजापत्यम्। पुनरुपनयनञ्च। ज्ञाने तु द्वैगुण्यम्। अभ्यासे उपनयनसहितप्रायश्चित्ता-वृत्तिः। उपनयनाशक्तौ चान्द्रायणं तदशक्तौ धेन्वष्टकम्।<br>क्षत्रियादीनां पादपादहानिः। | १ धेनुः। | ३ कार्षापणाः। | अनडुत्सहितगौः। अशक्तौ ६ कार्षापणाः। |
| हंसमद्गुकाकोलकाकखञ्जरी-टमत्स्यादवलाकाशुकसारि-काचक्रवाकप्लवकोककलवि-ङ्करज्जुवालसारसदात्यूहभा-सकोकिलमण्डूकभुजगाना-मन्यतमस्य मांसभक्षणम्। | विप्रस्याज्ञानतः सकृद्भोजने त्रिरात्रोपवासः।<br>ज्ञानतो द्वैगुण्यम्।<br>ज्ञानाभ्यासे प्रायश्चित्तावृत्तिः।<br>क्षत्रियादीनां पादपादहानिः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| मत्स्यभक्षणम्। | विप्रस्य कामतस्त्र्यहोपवासः।<br>अकामत एतदर्द्धम्।<br>क्षत्रियादीनां पादपादहानिः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| शुष्कमांस-गर्भशय्याभूम्यन्तर्गत-पक्वमांसजीर्णपक्वमांससूना-मांसशुष्कमांसानामन्यतमस्य भक्षणम्। सूना घातनस्थली तद्भवं मांसम्। | कामतः सकृद्भक्षणे त्र्यहोपवासः।<br>अकामत एतदर्द्धम्।<br>अभ्यासे प्रायश्चित्तावृत्तिः।<br>एतत् ब्राह्मणस्य। क्षत्रियादीनां पाद-पादहानिः। | ०<br>० | १॥० कार्षापणः।<br>॥।० पणाः। | यथाशक्ति।<br>यथाशक्ति। |
| षष्ठ्यां पञ्चपर्व्वसु च स्त्रीतैल-मांससम्भोगः क्षुरकर्म्म च। | एकाहोपवासः।<br>अभ्यासे प्रायश्चित्तावृत्तिः।<br>एतद्ब्राह्मणस्य। क्षत्रियादीनां पाद-पादहानिः। | ० | ॥० पणाः। | यथाशक्ति। |
| वृथापायसपूपशष्कुलीकृशरसं-यावशिग्रुलोहितवृक्षनिर्या-सामेध्यप्रभवानां भक्षणम्। | कामतस्त्र्यहोपवासः।<br>अज्ञानतस्तदर्द्धम्।<br>एतद्ब्राह्मणस्य। क्षत्रियादीनां पाद-पादहानिः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| एकाकिमिष्टान्नभक्षणम्। | एकाहोपवासः।<br>अभ्यासे द्वैगुण्यम्। | ० | ॥० पणाः। | यथाशक्ति। |
| अस्नेहाक्तपर्युषितान्नदधिवर्ज-शुक्तक्षारलवणभक्षणम्। | अज्ञानत एकाहोपवासः।<br>ज्ञानतस्त्र्यहोपवासः।<br>अभ्यासे द्वैगुण्यम्। | ०<br>० | ॥० पणाः।<br>१॥० कार्षापणः। | यथाशक्ति।<br>यथाशक्ति। |
| वाग्दुष्टभावदुष्टभाजन-पक्वद्रव्यभक्षणम्। | अभ्यासे त्रिरात्रयावकपानम्। | ० | ॥।० पणाः। | यथाशक्ति। |
| शूद्रभाजने भिन्नकांस्ये च भो-जनम्। | अहोरात्रोपवासः पञ्चगव्यपानञ्च। | ० | ॥० पणाः। | यथाशक्ति। |
| कुम्भीभक्षणम्। | द्वादशरात्रं पयःपानम्। | सपादधेन्वसम्भ-वात् २ धेनू। | ३॥० कार्षा-पणाः। | यथाशक्ति। |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णादानम्। | दक्षिणा। |
|---|---|---|---|---|
| लसुनपलाण्डुगृञ्जनभक्षणम्। तद्रसादिभिर्लसुनादितुल्यद्रव्यभक्षणञ्च। | ज्ञानतश्चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| | अज्ञानात्तु प्रजापत्यकृच्छ्रम्। | पादोनधेनुचतुष्टयासम्भवात् ४ धेनवः। | ११।० कार्षापणाः। | यथाशक्ति। |
| | चिरतराभ्यासे संवत्सरयावकपानम्। एतदुभयत्र पुनरुपनयनमपि शूद्राणामुपनयनतुल्यचान्द्रायणेन सह प्रकृतव्रतस्य पादः। | १५ धेनवः। | ४५ कार्षापणाः। | यथाशक्ति। |
| सजातीयन्सतसूतकिनां पक्वान्नभक्षणम्। | ज्ञानतः प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| | अज्ञानात् त्र्यहोपवासः। अभ्यासे द्वैगुण्यादिकम्। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| मृतसूतकिनां ब्राह्मणक्षत्रियवैश्यशूद्राणामामान्नस्य ब्राह्मणकर्तृकभक्षणम्। | विप्रस्यामान्ने प्राणायामः। क्षत्रियस्यामान्ने शतगायत्रीजपः। वैश्यस्यामान्ने पञ्चशतगायत्रीजपः। शूद्रस्यामान्ने अष्टसहस्रगायत्रीजपः। अभ्यासे द्वैगुण्यम्। | | | |
| मृतकिसूतकिजलपानम्। | ब्राह्मणस्य पञ्चगव्यं पीत्वा उपवासः। एतत् सकृदज्ञाने ज्ञाने तु द्वैगुण्यम्। अभ्यासे त्वावृत्तिः। तज्जलस्पर्शे स्नानमात्रम्। क्षत्रियादीनां पादपादहानिः। | ० | ॥० पणाः। | यथाशक्ति। |
| नवश्राद्धान्नभोजनम्। नवश्राद्धन्तु साग्नीनां चतुर्थपञ्चमनवमैकादशाहक्रियमाणं निरग्नीनान्तु आद्यश्राद्धमात्रम्। | चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| प्रथममासिकश्राद्धान्नभोजनम्। | पराकः। | ५ धेनवः। | १५ कार्षापणाः। | यथाशक्ति। |
| त्रिपक्षे प्रेतश्राद्धान्नभोजनम्। | अतिकृच्छ्रम्। | ३ धेनवः। | ९ कार्षापणाः। | यथाशक्ति। |
| द्विमासादिषण्मासपर्यन्तं प्रेतश्राद्धान्नभोजनम्। | प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| षण्मासादूर्द्धमब्दपर्यन्तं प्रेतश्राद्धान्नभोजनम्। | पादकृच्छ्रम्। | ० | १ कार्षापणः। | यथाशक्ति। |
| पुनराब्दिकश्राद्धान्नभोजनं अर्थात् सपिण्डीकरणान्नभोजनम्। एतत् स्मार्त्तमतं शूलपाणिमते तु द्वितीयसांवत्सरिकान्नभोजनम्। | एकाहोपवासः। | ० | ॥० पणाः। | यथाशक्ति। |
| पक्वाद्यनन्तरितहस्तदत्तानां एकहस्तदत्तानां शूद्रादत्तानाञ्च घृततैललवणव्यञ्जनपानीयपायसमाक्षिकफाणितगोरसशाकानां भक्षणम्। | द्वादशसाध्यसान्तपनम्। एतत् ज्ञानतः। अज्ञानादर्द्धम्। लौहपात्रेण परिवेषणेऽप्येतदेव प्रायश्चित्तं ज्ञेयम्। एतद्ब्राह्मणस्य। क्षत्रियादीनां पादपादहानिः। | ० | १ कार्षापणः। | यथाशक्ति। |
| अकृतापोशानस्य अकृतमौनस्य च भोजनम्। | अष्टोत्तरशतगायत्रीजपः एतद्द्विजानामनापद्विषयम्। | ० | ० | ० |
| अकृताचमनस्य पानभोजनम्। | अष्टोत्तरसहस्रगायत्रीजपः उपवासो वा। अभ्यासे द्विगुणादि। एतत् कटुकषायताम्बूलेक्षुव्यतिरिक्तभोजनविषयम्। | ० | ॥० पणाः। | यथाशक्ति। |

| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| यज्ञोपवीतरहितकर्तृकान्नभोजनम् । | स्नानं शतगायत्रीजपः उपवासश्च । | ० | ॥० पणाः । | यथाशक्ति । |
| रेतोमूत्रपुरीषाणामन्यतमस्य भक्षणम् । | ज्ञानतश्चान्द्रायणम् । | ८ धेनवः । सार्द्धसप्तधेन्वसम्भवात् । | २२॥० कार्षापणाः । | यथाशक्ति । |
| | अज्ञानतस्तप्तकृच्छ्रम् । | पादोनधेनुचतुष्टयासम्भवात् ४ धेनवः । | ११।० कार्षापणाः । | यथाशक्ति । |
| | बलात्कारे प्राजापत्यम् । सर्व्वत्र द्विजातीनां पुनः संस्कारश्च । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| विण्मूत्रादिदूषितफलादिभक्षणम् । | संसर्गमात्रे कृच्छ्रपादः । | ० | ॥|० पणाः । | यथाशक्ति । |
| | सन्निकृष्टे अर्थात् महत्संसर्गे कृच्छ्रार्द्धम् । एतत् रसास्वादनानुपलम्भनपक्षे अज्ञानतः सकृद्विषयम् । ज्ञानतो द्वैगुण्यम् । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | रसाद्युपलम्भे तु गौतमोक्ततप्तकृच्छ्रं द्वादशाहसाध्यम् । अज्ञानत उपलम्भे अर्द्धम् । क्षत्रियादीनां पादपादहानिः । | पादोनधेनुचतुष्टयासम्भवात् ४ धेनवः । | ११।० कार्षापणाः । | यथाशक्ति । |
| स्वक्लोदभोजनम् । | अहोरात्रोपवासः । | | ॥० पणाः । | यथाशक्ति । |
| | अभ्यासे याज्ञवल्क्योक्तचतुर्दशाहसाध्यतप्तकृच्छ्रम् । | सपादधेन्वसम्भवात् २ धेनू । | ३॥|०कार्षापणाः । | यथाशक्ति । |
| ब्रह्मचारिणां मधुमांसभोजनम् । | ज्ञानतः प्राजापत्यम् । अज्ञानात् अर्द्धम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| ब्रह्मचारिणामामिषभाण्डपक्वान्नभोजनम् । | त्र्यहं कुशमूलविपक्वक्षीरपानमात्रम् । एतदज्ञानतः । | ० | १ कार्षापणः । | यथाशक्ति । |
| | ज्ञानतो द्वैगुण्यम् । | ० | २ कार्षापणौ । | यथाशक्ति । |
| देवतातिथिभृत्यादिवर्जनभोजनम् । | अभ्यासे प्राजापत्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| अस्थ्यादिदूषितान्नभोजनम् । अस्थिशब्दोऽत्राभक्ष्यास्थिमात्रवचनम् । | स्नात्वार्कमर्च्चयित्वा घृतमात्राशनम् । | ० | ॥० पणाः । | यथाशक्ति । |
| मत्स्यकण्टकशम्बूकशङ्खशुक्तिकपर्द्दकभक्षणम् । | पञ्चगव्यमात्रभक्षणम् । | ० | ॥० पणाः । | यथाशक्ति । |
| पुंसवनसीमन्तोन्नयनकर्म्मणि भोजनम् । | ज्ञानाभ्यासे चान्द्रायणम् । | ८ धेनवः । | २२॥०कार्षापणाः । | यथाशक्ति । |
| | अज्ञानाभ्यासे तदर्द्धम् । | ४ धेनवः । | ११।०कार्षापणाः । | यथाशक्ति । |
| | सकृदज्ञाने विष्णूक्तकृच्छ्रपादः । | ० | ॥|० पणाः । | यथाशक्ति । |
| | सकृज्ज्ञाने द्वैगुण्यं कृच्छ्रार्द्धम् । | ० | १॥०कार्षापणः । | यथाशक्ति । |
| जातकर्म्मादिसंस्कारान्नभोजनम् । | अज्ञानतोऽसपिण्डानां त्र्यहसाध्यं सान्तपनम् । | ० | १ कार्षापणः । | यथाशक्ति । |
| | ज्ञानतो द्वैगुण्यम् । | ० | २ कार्षापणौ । | यथाशक्ति । |
| भोजनकाले गुदस्रावः । | अहोरात्रमुषित्वा पञ्चगव्यपानम् । एतत् सकृन्निगीर्णग्रासे । | ० | ॥० पणाः । | यथाशक्ति । |
| | अत्यन्तग्रासाशने त्रिरात्रोपवासः । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| भोजनकाले मृतसूतकाद्यशौचे तदन्नभक्षणम् । | ग्रासभोजने एकोपवासः । | ० | ॥० पणाः । | यथाशक्ति । |
| | सकलान्नभोजने त्रिरात्रोपवासः । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | अभोजने स्नानमात्रम् । | | | |
| तैलाभ्यङ्गादिस्नानार्हस्याकृतस्नानस्य भोजनम् । | स्नात्वा अष्टोत्तरसहस्रगायत्रीजपः । अभ्यासे प्रायश्चित्तावृत्तिः । | ० | ० | ० |

| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| परिहितनीलीवस्त्रस्य भोजनम् । | अज्ञानतस्त्रिरात्रोपवासः । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | ज्ञानात् द्वैगुण्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| स्वकीयोच्छिष्टभोजनम् । | कृच्छ्रपादः । एतत् सकृदज्ञानतः । अभ्यासे द्वैगुण्यादिकम् । व्यक्तभाजने भोजनेऽप्येवम् । | ० | ॥॥० पणाः । | यथाशक्ति । |
| ब्राह्मणकर्तृकब्राह्मणोच्छिष्टभोजनम् । | महाव्याहृतिभिरामन्त्र्य जलं पीत्वा उपवसेत् । एतत् सकृदज्ञानतः । | ० | ॥० पणाः । | यथाशक्ति । |
| | ज्ञानात् द्वैगुण्यम् । | ० | १ कार्षापणः । | यथाशक्ति । |
| ब्राह्मणकर्तृकक्षत्रियोच्छिष्टभोजनम् । | सकृदज्ञाने त्र्यहं ब्राह्मीरसविपक्वक्षीरपानमात्रम् । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | ज्ञाने द्वैगुण्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| ब्राह्मणकर्तृकवैश्योच्छिष्टभोजनम् । | सकृदज्ञाने त्र्यहोपवासः ब्रह्मसुवर्चलापानञ्च । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | ज्ञानात् द्वैगुण्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| ब्राह्मणकर्तृकशूद्रोच्छिष्टभक्षणम् । | सकृदज्ञाने षड्रात्रोपवासः । ज्ञानात् द्वैगुण्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | ज्ञानाभ्यासे चान्द्रायणम् । क्षत्रियादीनां पादपादहानिः । एतच्चात्रपितृज्येष्ठभ्रातृणामुच्छिष्टव्यतिरिक्तविषयं तेषामुच्छिष्टस्य भोज्यत्वात् । | ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| विड़ालकाकमूषिकनकुलश्वगवां उच्छिष्टभोजनम् । | त्र्यहोपवासः । एतत् सकृज्ज्ञानतः । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | अज्ञाने ब्रह्मसुवर्चलां पीत्वोपवासः । ब्रह्मसुवर्चला तु पीतकुसुमसूर्य्यावर्त्तः । | ० | ॥० पणाः । | यथाशक्ति । |
| | अत्यन्ताभ्यासे अतिकृच्छ्रम् । | ३ धेनवः । | ६ कार्षापणाः । | यथाशक्ति । |
| ब्राह्मणस्य कुतुसितपङ्क्तौ भोजनम् । पङ्क्तेः कुतुसितत्वन्तु निन्दितब्राह्मणाद्युपवेशनेन जलादिना पङ्क्तिभेदमन्तरेण च भवति । | अहोरात्रोपवासः स्नानं पञ्चगव्यपानञ्च । एतत् ज्ञानतः । | ० | ॥० पणाः । | यथाशक्ति । |
| | क्षत्रियपङ्क्तौ भोजने नक्तव्रतम् । | ० | ।० पणाः । | यथाशक्ति । |
| | वैश्यपङ्क्तौ एकरात्रोपवासः । | ० | ॥० पणाः । | यथाशक्ति । |
| | शूद्रपङ्क्तौ त्रिरात्रोपवासः । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| पङ्क्तिषु एकस्योत्थाने भोजनम् । | द्व्यहसाध्यसान्तपनम् । एतद्ब्राह्मणस्य । क्षत्रियादीनां पादपादहानिः । एतज्ज्ञानतः सकृत् । अज्ञानतोऽर्द्धम् । | ० | १ कार्षापणः । | यथाशक्ति । |
| सुराभाजनस्थजलपानम् । | पक्षं यावकपानम् । एतज्ज्ञानतः । अज्ञानतोऽर्द्धम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| मद्यभाण्डस्थजलपानम् । | सप्तरात्रं यावकपानम् । एतज्ज्ञानतः । अज्ञानतोऽर्द्धम् । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | सुरासंस्पृष्टरेतोमूत्रादिदूषितजलादिपाने तु चतुरहसाध्यं तप्तकृच्छ्रम् । एतदपि ज्ञाद्रुपलब्धावभ्यासे । | सपादधेन्वसम्भवात् २ धेनू । | ३॥॥०कार्षापणाः । | यथाशक्ति । |
| चण्डालकूपभाण्डोदकपानम् । | ब्राह्मणस्य सान्तपनम् । | २ धेनू । | ६ कार्षापणाः । | यथाशक्ति । |
| | क्षत्रियस्य प्राजापत्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | वैश्यस्य प्राजापत्यार्द्धम् । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | शूद्रस्य प्राजापत्यपादः । एतत् सर्व्वं ज्ञानतः । अज्ञानादेतस्यार्द्धम् । | ० | ॥॥० पणाः । | यथाशक्ति । |
| | आपत्काले तु पूर्व्वैदुक्तमोत्थ पञ्चगव्यपानम् । | ० | ॥० पणाः । | यथाशक्ति । |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| चण्डालस्पृष्टनीरजलादिपानम्। | त्रिरात्रमुपोष्य पञ्चगव्यपानम्। एतत् ज्ञानतः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | अज्ञानात् द्व्यहसाध्यसान्तपनम्। | ० | १ कार्षापणः। | यथाशक्ति। |
| अन्त्यजखानितकूपादिजलपानम्। | उपवासपूर्व्वकपञ्चगव्यपानम्। एतदज्ञानतः। | ० | ॥० पणाः। | यथाशक्ति। |
| | ज्ञातात् द्वैगुण्यम्। | ० | १ कार्षापणः। | यथाशक्ति। |
| अन्त्यजभाण्डस्थजलादिपानम्। | ब्राह्मणस्य द्व्यहसाध्यं ब्रह्मकूर्च्चव्रतम्। एतत् अज्ञानतः। ज्ञानतो द्वैगुण्यम्। | ० | १ कार्षापणः। | यथाशक्ति। |
| | शूद्रस्य नोपवासः पञ्चगव्यपानमात्रम्। ब्रह्मकूर्चं यथा। "अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः। पञ्चगव्यं पिबेत् प्रातर्ब्रह्मकूर्च्चविधिः स्मृतः॥" पञ्चगव्यं यथा। "गोशकृत् द्विगुणं मूत्रं सर्पिर्विद्याच्चतुर्गुणम्। क्षीरमष्टगुणञ्चैव पञ्चगव्ये तथा दधि॥" अथवा। "गोमूत्रमाषकास्त्वष्टौ गोमयस्य तु षोडश। क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्त्तिताः॥ गोमूत्रवद्घृतस्योक्तास्तदर्द्धेन कुशोदकम्॥" | ० | ॥० पणाः। | यथाशक्ति। |
| शूद्रोदकपानम्। | उपोष्य बिल्वपद्मपलाशकुशानामुदकमात्रपानम्। एतद्द्व्यहसाध्यं ज्ञानतः सकृत्पाने। अज्ञानादर्द्धम्। नवभाण्डोदकपाने प्रायश्चित्ताभावः। | ० | १ कार्षापणः। | यथाशक्ति। |
| पीतशेषपानीयपानम्। केवलवामहस्तेन जलपानञ्च। | त्रिरात्रोपवासः। एतच्च ज्ञानतः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | अज्ञानतोऽर्द्धम्। एतत् प्रायश्चित्तं ग्रासशेषाशनादिष्वपि ज्ञेयम्। | ० | ॥।० पणाः। | यथाशक्ति। |
| | शूद्रपीतशेषजलपाने तु ब्राह्मणस्य चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| प्रपादिजलपानम्। आदिना कूपजलाहरणार्थघटस्थजलं द्रोणीजलं खड्गादिकोषस्थजलञ्च। | सचेलस्नानम्। उपवासश्च। एतत् सकृज्ज्ञानतः। आपदि दोषाभावः। | ० | ॥० पणाः। | यथाशक्ति। |
| विण्मूत्रसंस्पृष्टकूपजलपानम्। | त्रिरात्रोपवासः। एतदज्ञानतः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | ज्ञानतः सान्तपनम्। | २ धेनू। | ६ कार्षापणाः। | तथा। |
| विण्मूत्रसंस्पृष्टकुम्भस्थजलपानम्। | अज्ञानतः सान्तपनम्। ज्ञानतो द्वैगुण्यम्। | २ धेनू। | ६ कार्षापणाः। | यथाशक्ति। |
| शवदूषितजलपानम्। एतत् मानुषेतराभक्ष्यपञ्चनखशवदूषितकूपजलपानपरम्। | ब्राह्मणस्य त्रिरात्रोपवासः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | क्षत्रियस्य द्व्यहोपवासः। | ० | १ कार्षापणः। | यथाशक्ति। |
| | वैश्यस्यैकाहोपवासः। | ० | ॥० पणाः। | यथाशक्ति। |
| | शूद्रस्य नक्तम्। सर्व्वेषां व्रतान्ते पञ्चगव्यपानम्। एतत् ज्ञानतः। अज्ञानतोऽर्द्धम्। एतदक्लिन्नशवे। | ० | ।० पणाः। | यथाशक्ति। |
| | ज्ञानतः क्लिन्ने षड्रात्रोपवासः। एतत् सर्व्वं मानुषशवेतरपरम्। मानुषशवे द्विगुणम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| | कामाभ्यासे पराकः। | ५ धेनवः। | १५ कार्षापणाः। | यथाशक्ति। |
| | अत्यन्ताभ्यासे चान्द्रायणम्। | ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |

| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| अपेयक्षीरपानम् । तत्क्षीरविकारपानञ्च । अपेयक्षीरं यथा । अनिर्दशानां गोमहिषीच्छागीनां क्षीरम् । औष्ट्रं ऐकशफं आविकञ्च । सन्धिनीक्षीरम् । सन्धिनी वृषाक्रान्ता । विवत्साक्षीरम् । अरण्यच्छागीक्षीरम् । स्त्रीक्षीरम् । सवद्दुग्धाक्षीरम् । यमसूक्षीरम् । विवत्साया अन्यवत्सायाश्च क्षीरम् । मथितक्षीरम् । छागवर्ज्जं द्विस्तनीक्षीरम् । अमेध्यभुजः क्षीरम् । व्रणादिदूषितस्तनीक्षीरञ्च । | ज्ञानतोऽभ्यासे पञ्चं यावकपानम् ।<br>अज्ञानतोऽर्द्धम् ।<br>क्षत्रियादौ पादपादह्रानिः ।<br>अत्र उष्ट्रीक्षीरमानुषीक्षीरपाने पुनरुपनयनञ्च ।<br><br>इति अभक्ष्यभक्षणप्रायश्चित्तम् ॥ ❋ ॥ | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| अथ स्तेयम् । मणिमुक्ताप्रवालाश्ममयलौहकांस्योपलानां हरणम् । | द्वादशाहं कणभक्षणम् । तत् षडुपवासात्मकम् ।<br>अपहृतद्रव्यं स्वामिने दत्त्वैतत् करणीयम् । अत्र च सकृदभ्यासकालदेशद्रव्यस्वाम्यपहर्तृगुणदैन्याद्यपेक्षया उत्कृष्टापकृष्टद्रव्ययोर्वैषम्यदोषः समर्थनीयः । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| रजताश्वगोभूमिकन्यानां सकृत् हरणम् । एतत् ब्राह्मणसम्बन्धिविषयम् । अत्र कन्यापदं अधमकन्यापरम् । | चान्द्रायणम् । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| उत्कृतरक्षुद्रपशुहरणम् । | प्राजापत्यम् ।<br>अभ्यासे चान्द्रायणम् । | १ धेनुः ।<br>८ धेनवः । | ३ कार्षापणाः ।<br>२२॥०कार्षापणाः । | यथाशक्ति ।<br>यथाशक्ति । |
| धान्यान्नधनानां हरणम् । अन्नं कृतान्नम् । धनं गवादि । | अब्दकृच्छ्रम् ।<br>एतत् ब्राह्मणकर्तृकब्राह्मणस्वामिकदशकुम्भाधिकधान्यस्तेये ज्ञेयम् । कुम्भपरिमाणं यथा । दशद्रोणं भवेत् खारी कुम्भोऽपि द्रोणविंशतिः । | १५ धेनवः । | ४५ कार्षापणाः । | यथाशक्ति । |
| | द्विकालभोजनोचितभक्ष्यभोज्यान्नहरणे त्रिरात्रं पञ्चगव्यपानमात्रम् । भक्ष्यं मोदकादि । भोज्यं शक्रादि । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | एककालभोजनोचितान्नहरणे एकरात्रं पञ्चगव्यमात्रपानम् ।<br>धनमपि एतत्परिमाणधान्यमूल्यमवसेयम् । | ० | ॥० पणाः । | यथाशक्ति । |
| मनुष्यादिस्तेयम् । तत्तु दासदासीक्षेत्रगृहकूपवापीजलानां हरणम् । | चान्द्रायणम् ।<br>क्षेत्रादीनान्तु उपयोगातिशयाद्यभ्यासाद्यपेक्षयास्यैव प्रायश्चित्तं गुरुलाघवमिति । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| गुडादिस्तेयम् । आदिना कार्पाससर्पिर्लवणधान्यपक्वान्नौषधतैलशय्यावस्त्रोपानत्कांस्यलौहताम्रसीसकादयः । | कृच्छ्रपादः । एतत् सकृद्धरणविषयम् ।<br>अभ्यासे द्वैगुण्यम् ।<br>अत्र किञ्चिदधिकद्रोणत्रयस्य धान्यस्य तावद्धान्यमूल्यानाञ्चान्येषाञ्च हरणे एतद्देदितव्यम् । | ० | ॥।० पणाः । | यथाशक्ति । |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णोदानम्। | दक्षिणा। |
|---|---|---|---|---|
| तृणादिस्तेयम्। आदिना काष्ठद्रुमचैलचर्मामिषेक्षुतक्रमूलपुष्पवैदलस्रग्गन्धानां ग्रहणम्। वैदलं वेणुघटितभाण्डम्। गन्धः कस्तूर्यादिः। अत्रापवादः। अस्तेयमध्ये काष्ठमस्तेयञ्च तृणं गवे। | त्रिरात्रोपवासः। तृणादीनां हरणे मासैकव्रतम्। मासार्द्धं व्रतञ्च। प्राङ्मुनिना यदुक्तं तत् कालदेशापहर्त्तृस्वामिगुणदौर्गत्याभ्यासानभ्यासकामाकामापेक्षया उत्कृष्टापकृष्टद्रव्यापहारे च वेदितव्यम्। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| जीविकाहरणम्। | यस्य यस्य वर्णस्य वृत्तिच्छेदः तत्तद्वर्णवधोक्तं प्रायश्चित्तं कर्त्तव्यम्। | | | |
| | अत्यन्तवृत्त्यपहारे चान्द्रायणम्। अत्र चोत्तमाधमत्वे प्रयोजकादिके सकृदभ्यासौ ज्ञानाज्ञाने च संवीक्ष्य वधोक्तपादार्द्धादिव्यवस्थोहनीया। | सार्द्धसप्तधेन्वशक्तत्वात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| देवद्विजद्रव्यापहरणम्। | संवत्सरमप्सु मज्जनं अघमर्षणावर्त्तनञ्च। यच्चात्र गुरुप्रायश्चित्तं मुन्यन्तरोक्तं तदत्यन्ताभ्यास उत्तमसम्बन्धादपेक्षया समूह्यम्। इति स्तेयप्रायश्चित्तम्॥*॥ | | | |
| अथ अगम्यागमनम्। तत्र सवर्णासु अस्वजनस्त्रीगमनम्। तत्र ब्राह्मणस्य श्रोत्रियभार्यागमनम्। | सकृद्गमने त्रैवार्षिकव्रतम्। द्वितीये षाड्वार्षिकं तृतीये नववार्षिकं चतुर्थे संपूर्णं द्वादशवार्षिकम्। | ४५ धेनवः। | १३५ कार्षापणाः। | २५ गावः। अशक्तौ २५ कार्षापणाः। |
| | अश्रोत्रियनिर्गुणभार्यागमने द्वैवार्षिकव्रतम्। एतज्ज्ञानतः। अज्ञानादर्द्धम्। | ३० धेनवः। | ९० कार्षापणाः। | १७ गावः। अशक्तौ १६॥≈१३ कार्षापणाः। |
| क्षत्रियस्य क्षत्रियभार्यागमनम्। | द्वैवार्षिकव्रतम्। एतज्ज्ञानतः। अज्ञानादर्द्धम्। अभ्यासे द्विगुण्यादिकम्। | ३० धेनवः। | ९० कार्षापणाः। | १७ गावः। अशक्तौ १६॥≈१३ कार्षापणाः। |
| वैश्यस्य वैश्यभार्यागमनम्। | वार्षिकव्रतम्। एतज्ज्ञानतः। अज्ञानादर्द्धम्। | १५ धेनवः। | ४५ कार्षापणाः। | ९ गावः। अशक्तौ ८।≈७ कार्षापणाः। |
| शूद्रस्य पञ्चयज्ञानुष्ठायिन्यायवृत्तशूद्रभार्यागमनम्। | वार्षिकव्रतम्। एतज्ज्ञानतः। अज्ञानादर्द्धम्। | १५ धेनवः। | ४५ कार्षापणाः। | ९ गावः। अशक्तौ ८।≈७ कार्षापणाः। |
| शूद्रस्यान्यशूद्रागमनम्। | षाण्मासिकव्रतम्। एतज्ज्ञानतः। अज्ञानादर्द्धम्। | ८ धेनवः। | २२॥० कार्षापणाः। | ५ गावः। अशक्तौ ४≈१३॥ कार्षापणाः। |
| ब्राह्मणस्य क्षत्रियागमनम्। | सार्द्धवार्षिकव्रतम्। एतत् सकृज्ज्ञानतः। अज्ञानादर्द्धम्। | २३ धेनवः। | ६७॥० कार्षापणाः। | १३ गावः। अशक्तौ १२॥० कार्षापणाः। |
| ब्राह्मणस्य वैश्यागमनं विशिष्टशूद्रागमनञ्च। | षाण्मासिकव्रतम्। एतत् सकृज्ज्ञानतः। अज्ञानादर्द्धम्। | ८ धेनवः। | २२॥० कार्षापणाः। | ५ गावः। अशक्तौ ४≈१३॥ कार्षापणाः। |
| ब्राह्मणस्याधमशूद्रागमनम्। | सार्द्धमासिकव्रतम्। एतत् सकृज्ज्ञानतः। अज्ञानादर्द्धम्। | २ धेनू। | ५॥≈० कार्षापणाः। | १ गौः। अशक्तौ १ कार्षापणः। |
| क्षत्रियस्य वैश्यभार्यागमनं सच्छूद्रागमनञ्च। | नवमासिकव्रतम्। एतत् सकृज्ज्ञानतः। अज्ञानादर्द्धम्। | १२ धेनवः। | ३३॥॥० कार्षापणाः। | ७ गावः। अशक्तौ ६।० कार्षापणाः। |
| क्षत्रियस्याधमशूद्रागमनम्। | त्रैमासिकव्रतम्। एतत् सकृज्ज्ञानतः। अज्ञानादर्द्धम्। | ४ धेनवः। | ११।० कार्षापणाः। | २ गावौ। अशक्तौ २ कार्षापणौ। |
| वैश्यस्य सच्छूद्रागमनम्। | वार्षिकव्रतम्। एतज्ज्ञानतः। अज्ञानादर्द्धम्। | १५ धेनवः। | ४५ कार्षापणाः। | ९ गावः। अशक्तौ ८।≈७ कार्षापणाः। |
| वैश्यस्याधमशूद्रागमनम्। | सार्द्धचातुर्मासिकव्रतम्। एतज्ज्ञानतः। अज्ञानादर्द्धम्। | ६ धेनवः। | १६॥≈० कार्षापणाः। | ३ गावः। अशक्तौ २।१ कार्षापणाः। |
| अथ प्रतिलोमस्त्रीगमनम्। तत्र शूद्रस्याज्ञानतो ब्राह्मणीगमनम्। | द्वादशवार्षिकव्रतम्। ज्ञानात् गुर्व्वङ्गनागमनोक्तप्रकारेण मरणम्। | १८० धेनवः। | ५४० कार्षापणाः। | १०० गावः। अशक्तौ १०० कार्षापणाः। |

| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ । चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| | वैकल्पिकं चतुर्विंशतिवार्षिकव्रतम् । एतद्ब्राह्मणस्यापि करणीयम् । | ३६० धेनवः । | १०८० कार्षापणाः । | २०० गावः । अशक्तौ २०० कार्षापणाः । |
| वैश्यस्याज्ञानतो ब्राह्मणीगमनम् । | नववार्षिकव्रतम् । ज्ञानाद्द्वैगुण्यम् । ब्राह्मणस्यापि एतत् कार्य्यम् । | १३५ धेनवः । | ४०५ कार्षापणाः । | ७५ गावः । अशक्तौ ७५ कार्षापणाः । |
| क्षत्रियस्याज्ञानतो ब्राह्मणीगमनम् । | षाड्वार्षिकव्रतम् । ज्ञानाद्द्वैगुण्यम् । ब्राह्मणस्यापि एतत् कार्य्यम् । | ९० धेनवः । | २७० कार्षापणाः । | ५० गावः । अशक्तौ ५० कार्षापणाः । |
| यद्यपि शूद्रस्य ब्राह्मणीगमनं महापातकत्वेन तथा क्षत्रियवैश्ययोर्ब्राह्मणीगमनमनुपातकत्वेन चोक्तं तथाप्यनुलोमगमनं तावदुपपातकमेव तत्प्रसङ्गादसवर्णत्वेन प्रतिलोमस्त्रीगमनप्रायश्चित्तमप्युक्तमतो न वैयर्थ्यमिति । | | | | |
| शूद्रस्याज्ञानतः क्षत्रियागमनम् । | नववार्षिकव्रतम् । ज्ञानाद्द्वैगुण्यम् । क्षत्रियाया अप्येतत् । | १३५ धेनवः । | ४०५ कार्षापणाः । | ७५ गावः । अशक्तौ ७५ कार्षापणाः । |
| वैश्यस्याज्ञानतः क्षत्रियागमनं शूद्रस्याज्ञानतो वैश्यागमनञ्च । | नवमासाधिकषाड्वार्षिकव्रतम् । ज्ञानाद्द्वैगुण्यम् । क्षत्रियाया वैश्यायाश्चाप्येतत् । | १०२ धेनवः । | ३०३॥० कार्षापणाः । | ५७ गावः । अशक्तौ ५६।० कार्षापणाः । |
| अथ समोत्तमवर्णद्वित्रिपुरुषव्यभिचरितसवर्णासवर्णस्त्रीगमनम् । | | | | |
| तत्र ब्राह्मणस्य समोत्तमवर्णद्वित्रिपुरुषव्यभिचरितशूद्रागमनम् । | सकृद्गमने मासार्द्धं गोमूत्रसिद्धयावकपानम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | अभ्यासे मासं गोमूत्रसिद्धयावकपानम् । | २ धेनू । | ६ कार्षापणाः । | यथाशक्ति । |
| ब्राह्मणस्य समोत्तमवर्णद्वित्रिपुरुषव्यभिचरितक्षत्रियागमनम् । तथाविधवैश्यागमनञ्च । | सकृद्गमने सान्तपनम् । अभ्यासे प्रायश्चित्तावृत्तिः । | २ धेनू । | ६ कार्षापणाः । | यथाशक्ति । |
| अथ चातुर्वर्ण्यस्वैरिणीगमनम् । स्वैरिणी चतुःपुरुषगामिनी । सा द्विविधा । केनचिदनवरुद्धा अवरुद्धा च । | ब्राह्मणस्य स्वैरिण्या ब्राह्मण्या गमने त्रिरात्रोपवासः ब्राह्मणाय कृष्णाजिनदानञ्च । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | तथाविधक्षत्रियाया गमने त्रिरात्रोपवासः धनुर्दानञ्च । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | तथाविधवैश्याया गमने त्रिरात्रोपवासः अधःशिलादानञ्च । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | तथाविधशूद्राया गमने त्रिरात्रोपवासः उदकुम्भदानन्तथा संमार्जनीदानञ्च । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| ब्राह्मणस्य शूद्रान्त्यजादिगामिस्वैरिणीगमनम् । | द्वादशवार्षिकव्रतम् । क्षत्रियादौ पादपादहानिः । विमातृस्वैरिणीचाण्डालस्वैरिणीगमनेऽप्येवम् । सर्व्वत्राभ्यासे द्वैगुण्यम् । | १८० धेनवः । | ५४० कार्षापणाः । | १०० गावः । अशक्तौ १०० कार्षापणाः । |
| ब्राह्मणबन्धकीगमनम् । बन्धकी चात्र स्वभर्तृव्यतिरिक्तपञ्चपुरुषगामिनी । | कमण्डलुदानम् । | ० | ० | यथाशक्ति । |
| क्षत्रियबन्धकीगमनम् । | आयुधदानम् । | ० | ० | यथाशक्ति । |

| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| वैश्यबन्धकीगमनम् । | प्रतोददानम् । | ० | ० | यथाशक्ति । |
| शूद्रबन्धकीगमनम् । | स्नानपुरःसरप्राणायामः । | ० | ० | ० |
| | एतानि बन्धकीगमनप्रायश्चित्तानि सवर्णानुलोमप्रतिलोमविषयाणि ॥ ❋ ॥ | | | |
| अथ व्युत्क्रमविवाहः । तत्र ब्राह्मणस्य प्रथमतः क्षत्रियादिविवाहः । | दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय दारव्यतिक्रमिणे भिक्षां देहीति सप्तागाराणि चरेत् । सा वृत्तिः षण्मासान् । दारव्यतिक्रमी ब्राह्मणक्षत्रियवैश्यकन्याविवाहमकृत्वा यो ब्राह्मणः शूद्राविवाहं करोति स उच्यते । एतदनापदि सकृदज्ञानविषयम् । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| | आपदि त्वाह शातातपः । ब्राह्मणो राजन्यापूर्व्वां द्वादशरात्रं चरित्वा निर्व्विशेत् ताञ्चैवोपगच्छेत् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | वैश्यापूर्व्वां तप्तकृच्छ्रम् । | सपादधेन्वसम्भवात् २ धेनू । | ३॥०कार्षापणाः । | यथाशक्ति । |
| | शूद्रापूर्व्वां कृच्छ्रातिकृच्छ्रम् । | ५ धेनवः । | १५ कार्षापणाः । | यथाशक्ति । |
| | अनापदि ज्ञानाभ्यासे मनूक्तषैवार्षिकव्रतम् । | ४५ धेनवः । | १३५ कार्षापणाः । | २५ गावः । अशक्तौ २५ कार्षापणाः । |
| वेश्यागमनम् । | प्राजापत्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| पञ्चाधिकपुरुषगामिनी वेश्या । | अभ्यासे चान्द्रायणम् । | ८ धेनवः । | २२॥०कार्षापणाः । | यथाशक्ति । |
| रजस्वलागमनम् । | त्रिरात्रोपवासः । घृतप्राशनञ्च । | ० | १॥० कार्षापणाः । | यथाशक्ति । |
| | एतत् कामतः सकृद्गमने । | | | |
| | अभ्यासे तु द्वैगुण्यादिकम् । | | | |
| ऋतौ भार्य्यानभिगमनम् । | त्रिरात्रोपवासः । | ० | १॥० कार्षापणाः । | यथाशक्ति । |
| | ज्ञानाभ्यासे प्राजापत्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| पर्व्वसु स्त्रीगमनम् । | एकोपवासः । | ० | ॥० पणाः । | यथाशक्ति । |
| श्राद्धदिने मैथुनम् । | एकोपवासः । | ० | ॥० पणाः । | यथाशक्ति । |
| दिवामैथुनम् । | एकाहं यावकपानम् । नग्नस्य स्नाने नग्नपरस्त्रीदर्शनेऽप्येवं प्रायश्चित्तम् । | ० | ० | ० |
| | अभ्यासे प्रायश्चित्तावृत्तिः ॥ ❋ ॥ | | | |
| अथ स्त्रीव्यभिचारः । | समोत्तमवर्णेषु सकृदुपगमे प्राजापत्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | द्विरभ्यासे पराकः । | ५ धेनवः । | १५ कार्षापणाः । | यथाशक्ति । |
| | त्रिरभ्यासे चान्द्रायणम् । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| अन्त्यजागमनम् । अर्थात् रजकचर्म्मकारनटवरुड़कैवर्त्तमेदभिल्लवेणुजीविशैलूषाणां स्त्रीषु गमनम् । | अज्ञानतश्चान्द्रायणम् । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| | ज्ञानाद्द्वैगुण्यम् । | | | |
| | चतुर्व्विंशतिवारगमने द्वादशवार्षिकव्रतम् । | १८० धेनवः । | ५४० कार्षापणाः । | १०० गावः । अशक्तौ १०० कार्षापणाः । |
| | एतदज्ञानतः । | | | |
| | ज्ञानतो द्वैगुण्यम् । अव्यवहार्य्यता च । | | | |
| कापालिकस्त्रीगमनम् । | ज्ञानादब्दकृच्छ्रम् । | ३० धेनवः । | ९० कार्षापणाः । | यथाशक्ति । |
| | अज्ञानाच्चान्द्रायणद्वयम् । | १५ धेनवः । | ४५ कार्षापणाः । | यथाशक्ति । |
| अथ तिर्य्यग्योनिगमनम् । तत्र गोवर्ज्जपशुगमनम् । | सचैलस्नानपूर्व्वकं गोभ्यो यवसभारदानम् । | | | |
| | इदं सकृद्गमने । | | | |
| गोगमनम् । | गोवधोक्तमासिकव्रतम् । | ४ धेनवः । | १२ कार्षापणाः । | यथाशक्ति । |
| | एतत् सकृद्गमने । | | | |
| | अभ्यासे संवत्सरं प्राजापत्यम् । | ३० धेनवः । | ९० कार्षापणाः । | १७ गावः । अशक्तौ १६॥८२६। कार्षापणाः । |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| | अत्यन्ताभ्यासे द्वादशवार्षिकव्रतम्। इत्युपपातके अगम्यागमनप्रायश्चित्तं समाप्तम् ॥ * ॥ | १८० धेनवः। | ५४० कार्षापणाः। | १०० गावः। अशक्तौ १०० कार्षापणाः। |
| अथ परिवेदनादि। | ज्येष्ठेऽनिर्व्विष्टे कनीयान्निर्व्विशन् परिवेत्ता। परिवित्तो ज्येष्ठः। परिवेदनीया कन्या। परिदायी दाता। परिकर्त्ता याजकः। ते सर्व्वे पतिताः। एतेषां प्रायश्चित्तम्। | | | |
| | संवत्सरं प्राजापत्यम्। एतत् कामतः। अकामतोऽर्द्धम्। अत्रापवादः। "देशान्तरस्थक्लीवैकवृषणानसहोदरान्। वेश्याभिसक्तपतितशूद्रतुल्यातिरोगिणः॥ जडमूकान्धवधिरकुब्जवामनकुण्ठकान्। अतिवृद्धानभार्य्यांश्च कृषिसक्तान्नृपस्य च। धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा। कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्यति॥" | ३० धेनवः। | ९० कार्षापणाः। | १७गावः। अशक्तौ१६॥८१६। कार्षापणाः। |
| व्रात्यत्वम्। अर्थात् सावित्रीपतितत्वम्। षष्ठदशाब्दपर्य्यन्तमुपनयनाभावे ब्राह्मणस्य व्रात्यत्वम्। | पितृमातृरहितनिःस्वजनस्य सावित्रीपाते प्राजापत्यत्रयम्। यथाविध्युपनयनञ्च। आलस्यानवधानादिना सावित्रीपाते तु व्रात्यस्तोमयागः। | ३ धेनवः। | ९ कार्षापणाः। | यथाशक्ति। |
| एकविंशतिवर्षपर्य्यन्तमुपनयनाभावे क्षत्त्रियस्य व्रात्यत्वम्। त्रयोविंशतिवर्षपर्य्यन्तमुपनयनाभावे वैश्यस्य व्रात्यत्वम्। | तदेकाब्दिकं दिनत्रयाधिकमासचतुष्टयसमाप्यमुद्दालकव्रतम्। तद्व्रतं यथा। द्वौ मासौ यावकेन वर्त्तयेत् मासं पयसा अर्द्धमासमामिक्षया अष्टरात्रं घृतेन षड्रात्रमयाचितं त्रिरात्रमब्भक्षः अहोरात्रमुपवसेत्। | सपादनवधेन्वसम्भवात् १० धेनवः। | २७॥० कार्षापणाः। | यथाशक्ति। |
| | देशोपप्लवादिना सावित्रीपतने एकविंशतिरात्रं प्रसृतिमितयावकपानम्। तत उपनयनम्। | ४ धेनवः। | ९॥० कार्षापणाः। | यथाशक्ति। |
| अथावकीर्णम्। अर्थाद्ब्रह्मचारिणो योषिद्गमनम्। | षण्मासं ब्रह्महत्याव्रतम्। खरचर्म्मपरिधानञ्च। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | ५ गावः। अशक्तौ ४८१४ कार्षापणाः। |
| | अभ्यासे संवत्सरं ब्रह्महत्याव्रतम्। | १५ धेनवः। | ४५ कार्षापणाः। | ९ गावः। अशक्तौ ८।८॥ कार्षापणाः। |
| पितृष्वसृसुतादिपरिणयनम्। आदिना मातृष्वसृसुतामातुलसुतामातामहसपिण्डासगोत्रासमानप्रवरादीनां ग्रहणम्। | चान्द्रायणम्। त्यागानन्तरं मातृवद्भरणम्। एतत् ज्ञानतः। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| | अज्ञाने कृच्छ्राब्दपादः। | ४ धेनवः। | ११।० कार्षापणाः। | यथाशक्ति। |
| अग्न्युत्सादनम्। अर्थात् अग्निहोत्रिणामग्नित्यागः। | कामतः संवत्सरोत्सन्ने चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| | द्विवर्षोत्सन्ने सोमायनचान्द्रायणे। एतदनुसारेणोनाधिककालयोरूह्यम्। | सार्द्धाष्टधेन्वसम्भवात् ९ धेनवः। | २५॥० कार्षापणाः। | यथाशक्ति। |
| गृहस्थस्य चिरतरकालानग्नित्वम्। | गोवधोक्तत्रैमासिकव्रतम्। अल्पकाले अनाधाने च चान्द्रायणम्। | १२ धेनवः। | ३६ कार्षापणाः। | १० गावः। १ वृषः। अशक्तौ १५ कार्षापणाः। |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| ब्राह्मणस्य वेदानध्ययनं यज्ञाकरणं पुत्त्रानुत्पादनञ्च। | त्रैमासिकं गोव्रतम्। | १२ धेनवः। | ३६ कार्षापणाः। | १ वृषः। १० गावः। अशक्तौ १५ कार्षापणाः। |
| अनाश्रमित्वम्। | संवत्सरे प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| | वर्षद्वये अतिकृच्छ्रम्। | ३ धेनवः। | ९ कार्षापणाः। | यथाशक्ति। |
| | वर्षत्रये कृच्छ्रातिकृच्छ्रम्। | ६ धेनवः। | १८ कार्षापणाः। | यथाशक्ति। |
| | अत ऊर्द्ध्वं चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| सूर्य्योदयास्तकालयोः शयनम्। | सकृदाचरणे स्नानम्। | | | |
| | अभ्यासे प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| ब्रह्मचारिणः सन्ध्यादीनामतिक्रमः। आदिना अग्नीन्धनाकरणं भैक्ष्यचर्य्याकरणञ्च। | अरोगिणो निरन्तरं सप्तरात्रमकरणे अवकीर्णिव्रतम्। तत्तु खरचर्म्मपरिधानपूर्व्वकषाण्मासिकं ब्रह्महत्याव्रतम्। एतदूने ऊनं अधिके अधिकम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | ५ गावः। अशक्तौ ४८१४ कार्षापणाः। |
| अनातुरगृहस्थस्य सन्ध्यास्नानाह्निकनित्यक्रियापातः। | दिनैकनित्यक्रियातिपाते एकाहोपवासः। | ० | ६ रक्तिकरजतम्। | यथाशक्ति। |
| | दिनत्रयक्रियातिपाते कृच्छ्रार्द्धम्। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | वर्षैकनित्यक्रियातिपाते एकदिनक्रियातिपातप्रायश्चित्तानुसरणेन प्रायश्चित्तम्। | ० | २ पल ६तोलक-४ माषकमितरजतम्। | यथाशक्ति। |
| शूद्रव्यतिरिक्तायाज्ययाजनम्। अयाज्याश्च निन्दितप्रतिग्रहादिना निन्दितब्राह्मणादयः। | शतगायत्त्रीजपः। | ० | ० | ० |
| | अभ्यासे सहस्राधिकं चान्द्रायणं वा। दक्षिणात्यागाच्च पूतो भवति। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| शूद्रयाजनम्। | लोभादिना याजने अर्जितभुक्तावशिष्टधनस्यागाधजले प्रक्षेपपूर्व्वकं ब्रह्मचारिणे दानपूर्व्वकं वा चान्द्रायणं पुनरुपनयनञ्च। अक्षारलवणब्रह्मसुवर्च्चलापानञ्च। एतदशक्तौ तद्धनं परित्यज्य त्रिंशत्पुराणाः प्रदातव्याः। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| | स्नेहादनुप्रसङ्गादिना याजने द्रव्यत्यागपूर्व्वकं प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| | अज्ञानतः प्राणायामसहस्रम्। | | | |
| शूद्रप्रतिग्रहः। | सकृत्प्रतिग्रहे त्रिसहस्रगायत्त्रीजपः। | | | |
| | अभ्यासे चान्द्रायणम्। एतच्च द्रव्यत्यागपूर्व्वकं कार्य्यम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| उञ्छाश्ववर्त्तिचत्रियनृपतिप्रतिग्रहः। | षष्ठे काले चीराशनं मासैकं जलवासः प्रचुरतरद्विजतर्पणञ्च। मासोपवासेनैवास्य सङ्कलनम्। | १५ धेनवः। | ४५ कार्षापणाः। | यथाशक्ति। |
| अधाज्यजप्रतिग्रहः। स च अयाचितपुष्पफलशाकतृणकाष्ठधान्यपयोमांसदधिशय्यागेहकुशगन्धमणिमत्स्यादीतरविषयः। | ज्ञानादष्टचत्वारिंशद्वाराभ्यासात् द्वादशवार्षिकव्रतम्। | १८० धेनवः। | ५४०कार्षापणाः। | १०० गावः। अशक्तौ १०० कार्षापणाः। |
| | अज्ञानात् द्विरभ्यासे तप्तकृच्छ्रम्। | ४ धेनवः। | १२ कार्षापणाः। | यथाशक्ति। |
| | ज्ञानात् द्विरभ्यासे चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| चाण्डालप्रतिग्रहः। | अज्ञानात् अष्टचत्वारिंशद्वाराभ्यासात् द्वादशवार्षिकव्रतम्। | १८० धेनवः। | ५४० कार्षापणाः। | १०० गावः। अशक्तौ १०० कार्षापणाः। |
| | अज्ञानात् सकृत्कृते तप्तकृच्छ्रम्। | ४ धेनवः। | १२ कार्षापणाः। | यथाशक्ति। |
| | ज्ञानात् सकृत्कृते चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| पतितप्रतिग्रहः। | ज्ञानात् सकृत्कृते चान्द्रायणम्। अज्ञानात्तदर्द्धम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |

| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| प्रायश्चित्तद्रव्यग्रहणम् । | त्रिसहस्रगायत्रीजपः मासैकं गोष्ठे पयःपानं वा । एतत् लघुतरपापप्रायश्चित्तद्रव्यग्रहणे । | ० | ० | ० |
| स्वभावाग्राह्यकृष्णाजिनोभयतोमुखीशय्यादिप्रतिग्रहः । | उत्तमशय्यादिप्रतिग्रहे दशसहस्रगायत्रीजपः । मध्यमे पञ्चसहस्रगायत्रीजपः । अधमे अष्टोत्तरसहस्रसावित्रीजपः । द्वादशरात्रं पयोव्रतञ्च । अत्यन्तनिषिद्धकृष्णाजिनोभयतोमुखीप्रतिग्रहे लक्षगायत्रीजपः । | | | |
| अथ ब्राह्मणस्य क्षत्रियवैश्यवृत्त्या धनार्जनम् । | संवत्सरे चान्द्रायणम् । संवत्सराभ्यन्तरे मासैकद्विकादौ चान्द्रायणभागहारः कल्प्यः । संवत्सरादूर्द्धं द्वैगुण्यत्रैगुण्यादिकं कल्प्यम् । आपत्काले दोषाभावः । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| ब्राह्मणस्य सेवावृत्तिधनार्ज्जनम् । | प्राजापत्यत्रयं पुनरुपनयनञ्च । द्रव्यत्यागपूर्व्वकं करणीयम् । | ३ धेनवः । | ६ कार्षापणाः । | यथाशक्ति । |
| ब्राह्मणस्य गीतादिना धनार्जनम् । | चान्द्रायणम् । कृतप्रायश्चित्तस्याप्यव्यवहार्य्यत्वम् । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| ब्राह्मणस्य शूद्रसेवनम् । | चान्द्रायणम् । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| | चिरतरकालाभ्यासे त्रैवार्षिकव्रतम् । | ४५ धेनवः । | १३५ कार्षापणाः । | २५ गावः । अशक्तौ २५ कार्षापणाः । |
| अविक्रेयविक्रयः । ब्राह्मणस्याविक्रेयद्रव्याणि यथा । लवण पक्वान्न मधु क्षीर दधि घृतोदक सर्व्वगन्धोपल लाक्षा रक्तवासः गुड़ तैल ग्राम्यपशु एकशफ केश सर्व्वारण्यपशु विद्या याग खात गो शुक्ल ऊर्णा रस विष तिल शुक्ल नीली कौषेयवासः चर्म्म तक्रामसमांस सुरा सोम केश गोधूम कन्या हिङ्गु गुग्गुलु सर्जरस हरिताल मनःशिलाञ्जन गैरिक क्षार मणि मौक्तिक प्रवाल दन्त नख आर्द्रौषधि शुक्ति वेणु वैणव मृण्मयपात्र पुष्प मूल तुष कार्पास भस्मास्थि पिण्याक त्रपु सीसक कांस्यलोहोडुम्बर खड्गपात्राणि इत्यविक्रेयाणि । | सकृत्कृते त्रिरात्रोपवासः । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | द्विरभ्यासे प्राजापत्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | अत्यन्ताभ्यासे चान्द्रायणम् । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| | निखिलविक्रये बहुतरकालाभ्यासे वा त्रिसवनस्नानाधःशयनचतुर्थकालभोजनरूपसंवत्सरव्रतम् । शूद्रस्यात्यन्तापदि दोषाभावः । | १५ धेनवः । | ४५ कार्षापणाः । | ६ गावः । अशक्तौ ८।० कार्षापणाः । |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| निन्दितदेशगमनम्। तत्तु तीर्थयात्राव्यतिरेकेण। निन्दितदेशा यथा। कारस्करकलिङ्गोड्रान्ध्रशबरयुगन्धरभूमिलयसिन्धुसौराष्ट्रसौवीरप्रत्यन्तदेशाङ्गवङ्गकलिङ्गादयः। | एतान् गत्वा तत्रैव चिरमुषित्वा गङ्गादिगमनम्। तदशक्तौ पुनरुपनयनम्। | | | |
| | अतिचिरवासे पुनरुपनयनं चान्द्रायणञ्च। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| असत्याभिधानम्। | सकृदसत्यभाषणे कृष्णानुस्मरणम्। | | | |
| | अत्यन्ताभ्यासे तप्तकृच्छ्रम्। | ४ धेनवः। | १२ कार्षापणाः। | यथाशक्ति। |
| | अतिबहुतरकालाभ्यासे माससाध्यचान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| | साक्षिणोऽसत्यभाषणे ज्ञानाज्ञानतो द्वादशवार्षिकव्रतमित्युक्तमनुपातके। विवाहभयमैथुनबालप्रतारणपरीहासगोब्राह्मणहितस्त्रीराजस्वप्राणात्ययसर्व्वधनापहारविषयेषु मिथ्याकथने दोषाभावः। | | | |
| उच्छिष्टस्य चाण्डालादिदर्शनम्। | दर्शने एकरात्रोपवासः। | ० | ॥० पणाः। | यथाशक्ति। |
| | सम्भाषणे द्विरात्रोपवासः। | ० | १ कार्षापणः। | यथाशक्ति। |
| | संस्पर्शे त्रिरात्रोपवासः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | सहगमने सचेलस्नानम्। अनुच्छिष्टस्य दर्शने सूर्य्यादिदर्शनम्। सम्भाषणे ब्राह्मणसम्भाषणम्। इदं ज्ञाने। | | | |
| उच्छिष्टस्य सूर्य्यादिदर्शनम्। आदिना नक्षत्रचन्द्रौ। कामत इदम्। | एकोपवासः। | ० | ६ रक्तिकरजतम्। | यथाशक्ति। |
| तैलाभ्यक्तादिमूत्रोच्चारसमुत्सर्गः। आदिना अनाचान्तश्मश्रुकर्म्मिमैथुनिनः। | एकोपवासः। | ० | ॥० पणाः। | यथाशक्ति। |
| विप्राग्न्यादिमध्यगमनम्। आदिना दम्पतीगवोर्ग्रहणम्। | कामतोऽत्यन्ताभ्यासे चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| | सकृदभ्यासादिषु तु स्नातकव्रतलोपप्रायश्चित्तम्। एकदिनाभोजनम्। तदावृत्तिरूहनीया। | ० | ॥० पणाः। | यथाशक्ति। |
| अग्नौ पादप्रतापनम्। कुशेन पादसम्मार्जनञ्च। | एकोपवासः। इदं सकृत्करणे। अभ्यासे द्वैगुण्यादिकम्। | ० | ॥० पणाः। | यथाशक्ति। |
| गुरोर्ब्राह्मणस्य च तिरस्कारः। | दर्पेण हुङ्कारे त्वङ्कारे वादेन जये वाससा बन्धने तृणेन ताड़ने च क्षिप्रं प्रसाद्य दिनमेकमुपवासः। एतद्दोषतुसंरम्भतः सकृज्ज्ञेयम्। | ० | ॥० पणाः। | यथाशक्ति। |
| | शास्त्रीयविवादे दर्पात् पुनः पुनर्जये ज्ञात्वा प्रणिपत्य त्रिरात्रोपवासः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | प्रमादतः पादेन स्पर्शे एकरात्रोपवासः अभिवादनं प्रसादनञ्च। | ० | ॥० पणाः। | यथाशक्ति। |
| | क्रोधादिना अनुबन्धापेक्षया चान्द्रप्राजापत्यादिकं कल्प्यम्। | | | |
| | महापातकेन ब्राह्मणस्य विरुद्धाभिधाने कृच्छ्रातिकृच्छ्रम्। | ५ धेनवः। | १५ कार्षापणाः। | यथाशक्ति। |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| | उपपातकेन ब्राह्मणस्य विरुद्धाभिधाने प्राजापत्यम्।<br>जातिभ्रंशकरपातकोपपातकादन्यत्राक्रोशस्य लघुगुरुभावं प्रतिसन्धाय एकरात्रत्रिरात्रषड्रात्रोपवासाः।<br>प्रतिश्रुत्यादानादौ अल्पत्वबहुत्वाभ्याम् एकरात्रत्रिरात्रषड्रात्रोपवासाः।<br>देवर्षिगोब्राह्मणाचार्य्यमातृपितृनरेन्द्राणां प्रति ष्ठीवनाक्रोशे उल्मुकेन जिह्वादाहो हिरण्यदानञ्च। गुरुब्राह्मणभिन्ने प्रत्याक्रोशने प्रतिताड़ने च दोषाभावः। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| मिथ्याब्राह्मणशपथः। यावज्जीवसुहृतशपथश्च। | विप्रस्य वधसंयुक्तमिथ्याशपथे चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| | यावज्जीवसुहृतशपथे प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| अभिशापकरणम्। | मासमब्भक्षणम्।<br>गायत्त्र्या वशिष्ठोक्तशुद्धवतीनां वा शतजपश्च।<br>एतत् सकृन्महापातकाद्यभिशापे।<br>उपपातके त्वभ्यासतो ज्ञेयम्।<br>एषामहापातकाभिशापाभ्यासे त्वावृत्तितारतम्यात् प्रायश्चित्ततारतम्यं कल्प्यम्।<br>महापातकादन्यत्र एकविंशतिरात्रं सुवर्च्चलापानम्।<br>हीनवर्णेन उत्तमवर्णाभिशापे प्रतिलोमोक्तदण्डव्यवस्थया प्रायश्चित्तं कल्प्यम्। | १३ धेनवः। | ३९ कार्षापणाः। | यथाशक्ति। |
| अनृताभिशस्तता। | मासं कृच्छ्रम्। | सार्द्धधेनुद्वयासम्भवात् ३ धेनवः। | ७॥० कार्षापणाः। | यथाशक्ति। |
| | महापातकाभिशापे द्विमासं कृच्छ्रम्।<br>एतदभिशापकालातिक्रमे ज्ञेयम्। | ५ धेनवः। | १५ कार्षापणाः। | यथाशक्ति। |
| | अभिशापकालनिर्णयप्रवृत्तस्य उपपातकादिना अभिशस्तस्य कृच्छ्रम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| आरूढ़पतितत्वम्। व्याधिक्रोधादिना सन्न्यासवाक्यमुच्चार्य्य यो गृहस्थाश्रममाश्रयितुमिच्छति स आरूढ़पतितः तस्य भावः। | षण्मासान् प्राजापत्यम्।<br>एतत् सन्न्यासग्रहणान्तरनिवृत्तानाम्।<br>चिरतरकालसन्न्यासनिवृत्तस्य ब्राह्मणस्य श्वपदाङ्कनपूर्ब्बकनिर्ब्बासनम्। क्षत्त्रियविशोर्दास्यकरणम्। | १५ धेनवः। | ४५ कार्षापणाः। | यथाशक्ति। |
| | यावज्जीवव्रतानुष्ठानप्रवृत्तयोः ब्रह्मचारिवानप्रस्थयोः स्वधर्म्मनिवृत्तयोश्चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| जलाग्न्यादिभ्रष्टता। आदिना उद्बन्धनप्रव्रज्यानशनविषप्रपतनप्रायोपवेशशस्त्रघातिभ्यो भ्रंशनम्। | चान्द्रायणं तप्तकृच्छ्रद्वयं वा। अभ्यासे त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च। जातकर्म्मादिसंस्काराश्च। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| | चिताभ्रष्टायाः प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| व्रणकृम्युत्पत्तिः | त्रिसन्ध्यं गोमयगोमूत्राभ्यां स्नानम्। त्र्यहं पञ्चगव्यकुशोदकमात्रपानञ्च। इदञ्च नाभ्यधोदेशदंशविषयम्। | | | |
| | नाभेरूर्द्ध्वं कृम्युत्पत्तौ षड्रात्रमुपवासः। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |

| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ मूल्यदानम् । | दक्षिणा । |
|---|---|---|---|---|
| | शिरसि क्रिमिदंशने वृषदक्षिणायुक्तसान्तपनं तप्तकृच्छ्रं वा । | पादोनधेनुचतुष्टयासम्भवात् ४ धेनवः । | ११।० कार्षापणाः । | यथाशक्ति । |
| श्वादिदंशः । आदिना शृगालखरग्राम्यशूकराश्वोष्ट्रवराहपुंश्चलीवानरवायसानां दंशनम् । | पादयोररुधिरदर्शने जले प्राणायामः घृतप्राशनञ्च । पार्श्वयोरतिगाढ़दंशने नद्यां १६ प्राणायामाः । नाभेरधोगाढ़दंशने ब्रह्मचारिणस्त्र्यहं सायं पयःपानम् । | | | |
| | गृहस्थस्य त्रिरात्रमुपवासः । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | एकाहमग्निहोत्रिणः ।<br>नाभ्यूर्द्ध्वं दंशने एतद्द्वैगुण्यम् । बाह्वोश्चातुर्गुण्यम् । मूर्ध्नि षोड़शगुणम् । इदं सरुधिरदंशने । नाभेरूर्द्ध्वमतिगाढ़दंशने सागरगनदीस्नानपूर्ब्बकोपवासः शतं प्राणायामावर्त्तनञ्च । | ० | ॥० पणाः । | यथाशक्ति । |
| | व्रतस्थस्य श्वादिदंशने त्रिरात्रोपवासः सघृतयावकपानञ्च । बालस्याज्ञत्वे अशक्तत्वे वा तदीयपापक्षयं संकल्प्य पित्रादिः प्रायश्चित्तं कुर्य्यात् । दष्टस्यानस्य गायत्र्यष्टसहस्राभिमन्त्रणपूर्ब्बकसुल्मुकेन दहनम् । चतुर्भिः कलसैर्नदीसङ्गमे वा स्नानम् । स्त्रियास्तु विशेषः । उदितसोमनक्षत्रदर्शनं समुद्रदर्शनं वा । कृष्णपक्षे चन्द्रगमनदिग्दर्शनम् । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| विप्रादिहते चात्मघातम्मृते वा अश्रुपातजलादिदानम् । | दहनवहनकटक्रियातर्पणश्राद्धादौ तप्तकृच्छ्रम् । | ४ धेनवः । | १२ कार्षापणाः । | यथाशक्ति । |
| | तच्छवस्य केवलस्पर्शे अश्रुपाते वा एकाहोपवासः । | ० | ६ रक्तिकरजतम् । | यथाशक्ति । |
| | अभ्यासे अनडुत्सहितगोदक्षिणायुक्ततप्तकृच्छ्रम् । | ४ धेनवः । | १२ कार्षापणाः । | १ वृषः । १ गौः । अशक्तौ ६ कार्षापणाः । |
| | आत्मघातिनः स्नेहात् दाहादिकरणे तप्तकृच्छ्रसहितचान्द्रायणम् ।<br>बलात्कारेण उद्बन्धनम्मृतस्य पाशच्छेदनदहनवहनेषु मासं भैक्ष्यभक्षणं त्रिसवनस्नानञ्च ।<br>वेतनेन दहनवहनादिकरणे असम्बन्धिनां कृच्छ्रपादः । | १२ धेनवः । | ३४॥० कार्षापणाः । | यथाशक्ति । |
| | दहनवहनव्यतिरेकेण कामतः सर्व्वाङ्गीनानभ्यासस्पर्शे प्राजापत्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | तथैवाभ्यासे तप्तकृच्छ्रम् ।<br>द्विजस्य शूद्रशवानुगमने त्रिरात्राशौचं तदन्ते समुद्रगां नदीं गत्वा प्राणायामशतं कृत्वा घृतप्राशनम् । अवन्तीमासाद्य १००८ गायत्रीजपो वा ।<br>द्विजस्य द्विजशवानुगमने १०८ गायत्रीजपः ।<br>शूद्रस्य सर्व्वशवानुगमने स्नानम् । | ४ धेनवः । | १२ कार्षापणाः । | यथाशक्ति । |
| बलात्कारितम्लेच्छदास्याशुभकर्म्म । | म्लेच्छचाण्डालाद्यैर्दस्युभिः उच्छिष्टमार्ज्जनोच्छिष्टभक्षणखरोष्ट्रविड्वराहमांसभक्षणम्लेच्छस्त्रीसङ्गतदीयस्त्रीसहभोजना- | | | |

| अथोपपातकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ । चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| | द्विजुत्सितकर्म्म बलान्म्लेच्छैः कारितस्य निरग्निद्विजातेः प्राजापत्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | साग्नेश्चान्द्रायणम् । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| | क्षत्रियवैश्ययोः पराकः । | ५ धेनवः । | १५ कार्षापणाः । | यथाशक्ति । |
| | शूद्रस्य मासार्द्धं यावकपानम् । वत्सरादूर्द्ध्वं वर्षचतुष्टयं यावत् भागहारेण प्रायश्चित्तमूहनीयम् । तदूर्द्ध्वं तत्समत्वात् पतितत्वेन प्रायश्चित्तान्तराभावान्मरणम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| अनुदकमूत्रपुरीषकरणम् । | सचेलस्नानं गोस्पर्शश्च । अभ्यासे एकोपवासः सचेलस्नानञ्च । | ० | ॥० पणाः । | यथाशक्ति । |
| जलाग्न्योरशुचिद्रव्यप्रक्षेपः । | मासं यावकपानम् । एतदभ्यासे । | २ धेनू । | ६ कार्षापणाः । | यथाशक्ति । |
| | ज्ञानत ईश्वरार्त्तस्य त्रिरात्रोपवासः । इदमापः प्रहरत इति जपश्च । | ० | १॥० कार्षापणाः । | यथाशक्ति । |
| | अनार्त्तस्य कौतूहलादिना तप्तकृच्छ्रम् । | ४ धेनवः । | १२ कार्षापणाः । | यथाशक्ति । |
| अन्योन्यानुक्तद्वेषोत्पादनम् । अर्थान्वेनाच्छेदकरणम् । | अहोरात्रमनश्नन् भूत्वा पयःपानम् । | ० | ५ रजतमाषकाः । | धनुर्दण्डश्च । |
| शक्रधनुःपलाशाग्निदर्शकत्वम् । | इदं शक्रधनुरिति व्यपदिश्य कामतो दर्शयित्वाहोरात्रोपवासः । | ० | ३ रूप्यमाषकाः । | यथाशक्ति । |
| श्राद्धनिमन्त्रितब्राह्मणानाह्वानम् । | यतिचान्द्रायणम् । | ४ धेनवः । | ११।० कार्षापणाः । | यथाशक्ति । |
| देवागारक्षतेष्टकाकाष्ठशिलादिना गृहकरणम् । | प्राजापत्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| निष्ठीवनादि । आदिना वातकर्म्मदन्तश्लिष्टानृतश्चुत्पतितसम्भाषणवासःपरिधानानि । | आचमनम् । गोपृष्ठस्पर्शः । अर्कदर्शनम् । दक्षिणश्रवणस्पर्शो वा । अत्र पूर्व्वाभावे ततः परम् । इन्द्रियप्रवृत्तामेध्यस्य सुखस्पर्शे स्नानम् । | | | |
| यतीनां व्रतोपव्रतभङ्गः । व्रतानि यथा । अहिंसासत्यास्तेयमैथुनवर्ज्जनानि । उपव्रतानि यथा । अक्रोधगुरुशुश्रूषाप्रमादशौचाहारशुद्धीनि । | अहोरात्रोपवासपूर्व्वकचान्द्रायणम् । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| | रमणेच्छया स्त्रीसमीपगमने प्राणायामशतपूर्व्वकसान्तपनम् । | २ धेनू । | ६ कार्षापणाः । | यथाशक्ति । |
| | असद्वादे उपवासः प्राणायामशतञ्च । | ० | ॥० पणाः । | यथाशक्ति । |
| | अकामतः पशुक्रिमिहिंसायां कृच्छ्रातिकृच्छ्रम् । | ६ धेनवः । | १८ कार्षापणाः । | यथाशक्ति । |
| | चान्द्रायणं वा । इन्द्रियदौर्व्वल्यात् स्त्रीदर्शनात् स्कन्दने षोड़शप्राणायामाः । स्त्रियं विना कामतो दिवास्कन्दने त्रिरात्रोपवासः प्राणायामशताचरणञ्च । रात्रौ स्कन्दने स्नानपूर्व्वकद्वादशप्राणायामाः । | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः । | २२॥० कार्षापणाः । | यथाशक्ति । |
| | एकान्नमधुमांसामश्राद्धप्रत्यक्षलवणानामभोज्यानामेकैकस्य भोजने प्राजापत्यम् । योगिनां प्रमादे योगेन शुद्धिः । ज्ञानिनां ज्ञानमेव शुद्धिकारणम् । ब्रह्मचारिणोऽकामतः स्वप्ने रेतस्खलने स्नानम् । अर्कार्च्चनम् । त्रिः पुनर्मामित्यृचो जपश्च । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |

| अथोपपातकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| व्रतभङ्गः। | लोभान्मोहात् प्रमादाद्वा व्रतभङ्गे उपवासत्रयं केशमुण्डनञ्च। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| उष्ट्रखरयानम्। | कामतः सकृदारोहणे नग्नस्नाने च प्राणायामः। | | | |
| | अभ्यासे त्रिरात्रोपवासः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | अथवयानेनारोहणे नग्नस्य ईषदभ्यक्तस्नानभोजने च प्राणायामशतम्। अत्र उपपातकगणपठितेषु यत्र प्रायश्चित्तं नोक्तं तत्रोपपातकसामान्यप्रायश्चित्तमेव ग्राह्यम्। तत्तु मनूक्तं त्रैमासिकं गोव्रतं चान्द्रायणं वा। याज्ञवल्क्योक्तं मासं पयःपानं पराको वा। एतान्येव प्रायश्चित्तानि पापस्य गुरुलाघवमवगम्य व्यवस्थेयानि॥ ❋ ॥ | | | |

| अथ जातिभ्रंशकरपापानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| ब्राह्मणपीडाकरणम्। लशुनादिमद्ययोर्घ्राणम्। मित्रे कौटिल्यम्। पुंसि मैथुनञ्च। | कामतः सान्तपनम्। | २ धेनू। | ६ कार्षापणाः। | यथाशक्ति। |
| | अकामतः प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| | एतच्चाभ्यासे।<br>अत्रायं विशेषः। | | | |
| | ब्राह्मणावगोरणे प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| | ब्राह्मणे दण्डादिनिपातने अतिकृच्छ्रम्। | ३ धेनवः। | ९ कार्षापणाः। | यथाशक्ति। |
| | ब्राह्मणस्य शोणितोत्पादने कृच्छ्रातिकृच्छ्रम्। | ५ धेनवः। | १५ कार्षापणाः। | यथाशक्ति। |
| | ब्राह्मणाङ्गच्छेदने कृच्छ्रातिकृच्छ्रम्। | ५ धेनवः। | १५ कार्षापणाः। | यथाशक्ति। |
| | चान्द्रायणम्।<br>दशगोदानञ्च। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |

| अथ सङ्करीकरणपापानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| खराश्वोष्ट्रमृगहस्तिच्छागमेषमीनाहिमहिषाणां वधरूपाणि। | सकृत्करणे मासं यावकपानम्। | २ धेनू। | ६ कार्षापणाः। | यथाशक्ति। |
| | अभ्यासे कृच्छ्रातिकृच्छ्रम्। | ५ धेनवः। | १५ कार्षापणाः। | यथाशक्ति। |
| | अत्यन्ताभ्यासे चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |

| अथापात्रीकरणपापानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| निन्दितेभ्यो धनादानम्। वाणिज्यम्। शूद्रसेवनम्। असत्यभाषणञ्च। | सकृत्करणे चतुरहसाध्यं तप्तकृच्छ्रं शीतकृच्छ्रं वा। | सपादधेन्वसम्भवात् २ धेनू। | ३॥।०कार्षापणाः। | यथाशक्ति। |
| | अभ्यासे महासान्तपनम्। | ६ धेनवः। | १८ कार्षापणाः। | यथाशक्ति। |
| | अत्यन्ताभ्यासे चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |

| अथ मलावहपापानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| कृमिकीटपक्षिणां हननम्। मद्यानुगतद्रव्यभोजनम्। फलकाष्ठपुष्पाणां स्तेयम्। अधैर्य्यम्। तच्च गीतश्रवणादि। अल्पेऽपचये अत्यन्तवैक्लव्यञ्च। | सकृदाचरणे त्र्यहयावकपानम्। | ० | ॥४१२ | यथाशक्ति। |
| | अभ्यासे तप्तकृच्छ्रम्। | ४ धेनवः। | १२ कार्षापणाः। | यथाशक्ति। |
| | अत्यन्ताभ्यासे कृच्छ्रातिकृच्छ्रम्। एषु चतुर्षु यत्र यत्र प्रायश्चित्तविशेषो नोक्तस्तत्रैव बोध्यम्। | ५ धेनवः। | १५ कार्षापणाः। | यथाशक्ति। |
| **अथ प्रकीर्णकानि।** | **प्रायश्चित्तानि।** | **तदशक्तौ धेनुदानम्।** | **तदशक्तौ चूर्णीदानम्।** | **दक्षिणा।** |
| यदनुक्तं तत्प्रकीर्णकम्। इतिवचनात् अतिपातकाद्यन्यतमत्वेन विशेषतोऽनुक्तानि पापानि। | चान्द्रायणम्। पराकः। तुलापुरुषः। गवानुगमनम्। प्राजापत्यम्। एतानि सर्व्वपापप्रणाशकानि। पापस्य गुरुलाघवं वीक्ष्य प्रायश्चित्तान्येतानि शिष्टैर्व्यवस्थेयानि। | | | |
| अथास्पृश्यस्पर्शनम्। तच्च चाण्डालरजस्वलापतितसूतिकाशवशवस्पृक्छिन्नकोन्मत्तासूयिकग्राम्यकुक्कुटवराहादीनां स्पर्शनम्। | अनुच्छिष्टस्य चाण्डालादिस्पर्शे अकामतः सचेलं सशिरस्कं स्नानम्। कामतः सचैलस्नानम्। महाव्याहृतिभिर्होमः। घृतप्राशनञ्च। चिताधूमस्पर्शे ऋतुकालीनमैथुने दुःस्वप्ने वमने विरेके श्मश्रुकर्म्मणि यूपभक्ष्यपञ्चनखशवसक्लेहतदस्थां स्पर्शे स्नानपूर्व्वकं प्रक्षालितवस्त्रपरिधानम्। अनृतौ मैथुने मूत्रपुरीषत्यागवच्छुद्धिः। | | | |
| | सर्व्वाङ्गस्पर्शे त्रिरात्रोपवासः। रात्रौ शवबर्जास्पृश्यस्पर्शने सुवर्णं प्रक्षिप्य अग्निं सन्निधाप्य दिवाहृतजलैः स्नानम्। सर्व्वत्र प्रागन्नप्राशनात् शिशोरभ्युक्षणम्। प्राक् चूड़ाकरणात् बालस्याचमनम्। प्रागुपनयनात् कुमारस्य स्नानम्। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| अथोच्छिष्टस्य चाण्डालादिस्पर्शः। आदिना पतितरजस्वलान्त्यजश्वसूकरमद्यभाण्डानां ग्रहणम्। | सद्यः स्नात्वा परदिने प्रायश्चित्तं करणीयम्। | | | |
| | ऊर्द्ध्वोच्छिष्टस्य प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| | कामाभ्यासे सान्तपनम्। | ४ धेनवः। | १२ कार्षापणाः। | यथाशक्ति। |
| | अज्ञाने त्रिरात्रोपवासः। पञ्चगव्यपानञ्च। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | अर्द्धोच्छिष्टस्य अर्थादनिर्गीर्णग्रासस्य आमाशनोच्छिष्टस्य च प्राजापत्यपादः। | ० | ॥० पणाः। | यथाशक्ति। |
| | आपदि ज्ञानात् विशेषो यथा। | | | |
| | मूत्रत्यागाशौचिनः शवादिस्पर्शे एकोपवासः। | ० | ॥० पणाः। | यथाशक्ति। |
| | पुरीषत्यागाशौचिनः शवादिस्पर्शे दिनद्वयमुपवासः। | ० | १ कार्षापणः। | यथाशक्ति। |
| | मैथुनाशौचिनः शवादिस्पर्शे दिनत्रयमुपवासः। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | पानाशुचीनां शवादिस्पर्शे दिनचतुष्टयमुपवासः। | ० | २ कार्षापणौ। | यथाशक्ति। |
| अथ तैलाभ्यक्तस्य चाण्डालादिस्पर्शः। | उपवासः। पञ्चगव्यपानञ्च। चाण्डालोदकसंस्पृष्टस्य स्नानम्। | ० | ॥० पणाः। | यथाशक्ति। |
| | उच्छिष्टस्य चाण्डालोदकस्पर्शे त्रिरात्रोपवासः। | ० | १॥० कार्षापणः। | यथाशक्ति। |

| अथ प्रकीर्णकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| अथ रजकादिस्पर्शः। आदिना चर्म्मारवेणधीवरनटानां ग्रहणम्। | अनुच्छिष्टस्य द्विजस्य रजकादिभिरकामतः स्पर्शे आचमनम्। | | | |
| | कामतः शिरोव्यतिरिक्ताङ्गस्पर्शे तदङ्गप्रक्षालनपूर्व्वकमाचमनम्। | | | |
| | शिरःस्पर्शे स्नानम्। | | | |
| | उच्छिष्टस्य तु ब्राह्मणस्यानुच्छिष्टचर्म्मकारादिस्पर्शे एकरात्रं पयःपानम्। | | | |
| | उच्छिष्टचर्म्मकारादिकर्तृकस्पर्शे त्रिरात्रोपवासान्ते घृतप्राशनम्। ज्ञानत उभयोच्छिष्टविषयञ्चेदम्। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | अज्ञानतस्तदर्द्धम्। | ० | ॥॥० पणाः। | यथाशक्ति। |
| अथोच्छिष्टस्य ब्राह्मणस्योच्छिष्टतच्छूद्रस्पर्शः। | एकोपवासानन्तरं पञ्चगव्यपानम्। कामत इदम्। | ० | ॥० पणाः। | यथाशक्ति। |
| | अकामेऽप्युच्छिष्टे च नक्तम्। शुनः स्पर्शेऽप्येवम्। | ० | २ रजतरक्तिके। | यथाशक्ति। |
| अथोच्छिष्टोच्छिष्टसवर्णस्पर्शः। | द्वयोरेवोच्छिष्टयोर्ब्राह्मणयोरन्योन्यस्पर्शे तदन्नत्यागपूर्व्वकं स्नानम्। | | | |
| | अत उच्छिष्टस्य विप्रस्यानुच्छिष्टविप्रस्पर्शे दोषाभाव एव। एतदकामतः। | | | |
| | कामतो नक्तपूर्व्वं घृताशनम्। | ० | २ रजतरक्तिके। | यथाशक्ति। |
| | उच्छिष्टब्राह्मणस्योच्छिष्टक्षत्त्रस्पर्शे नक्तम्। | ० | २ रजतरक्तिके। | यथाशक्ति। |
| | तादृशवैश्यस्पर्शे उपवासः। | ० | ॥० पणाः। | यथाशक्ति। |
| | भुञ्जानयोः सवर्णयोः परस्परस्पर्शे तदन्नत्यागपूर्व्वकं स्नानं प्राणायामश्च। | | | |
| | अज्ञानात्तदन्नभोजने परदिने नक्तं पञ्चगव्यपानम्। तदन्ते भोजने न दोषः। | | | |
| | ज्ञानात् उपवासानन्तरं ब्रह्मकूर्चपानं हविष्यभोजनञ्च। | ० | ॥० पणाः। | यथाशक्ति। |
| | शूद्रस्यापि विशेषाश्रवणादुच्छिष्टोच्छिष्टसंस्पर्शे एतदेव। नक्ताशक्तौ रजतरक्तिकाद्वयं देयम्। | | | |
| अथ नीलीवस्त्रपरिधानम्। | अहोरात्रोपवासानन्तरं पञ्चगव्यपानम्। इदमज्ञाने। ज्ञाने द्वैगुण्यम्। | ० | ॥० पणाः। | यथाशक्ति। |
| | पालनाद्विक्रयात्तद्वृत्त्युपजीवनात् त्रीणि कृच्छ्राणि। | ३ धेनवः। | ९ कार्षापणाः। | यथाशक्ति। |
| | नीलीवस्त्रधारिणां स्नानदानतपोहोमस्वाध्यायपितृतर्पणमहायज्ञानां वृथात्वम्। स्त्रीणां क्रीडार्थसंयोगे शयनीये न दोषः। | | | |
| अथ पलाण्डुलशुनादिस्पर्शः। आदिना सुरामद्यशूद्रोच्छिष्टानां ग्रहणम्। | ऊर्द्धोच्छिष्टस्य द्विजस्य कामतः स्पर्शे त्र्यहं कुशजलपानं सावित्रीशतजपश्च। | ० | १॥० कार्षापणलभ्यकाञ्चनम्। | यथाशक्ति। |
| | मूत्रोच्छिष्टस्य स्पर्शे नक्तम्। | ० | २ रजतरक्तिके। | यथाशक्ति। |
| | कृतपुरीषोत्सर्गस्य पलाण्डुलशुनादिस्पर्शे एकोपवासः। | ० | ॥० पणाः। | यथाशक्ति। |
| | ऊर्द्धोच्छिष्टस्य त्र्यहोपवासः। | ० | ३ कार्षापणः। | यथाशक्ति। |
| | एतत्त्रयमकामतः। | | | |
| | अनुच्छिष्टस्य स्पर्शे केवलं स्नानम्। | | | |

| अथ प्रकीर्णकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ मूल्यदानम्। | दक्षिणा। |
|---|---|---|---|---|
| | अधोच्छिष्टस्य कामतः सुरेतरमद्यस्पर्शे अकामतः शूद्रोच्छिष्टस्य लशुनादीनाञ्च स्पर्शे अहोरात्रोपवासः। पञ्चगव्यपानञ्च। | ० | ॥० पणाः। | यथाशक्ति। |
| | कामतः सुराया स्पर्शने स्नानं प्राणायामत्रयं घृतप्राशनञ्च। | | | |
| | अकामतः सुरायाः स्पर्शने घ्राणे चाप्येवम्। | | | |
| | कामतस्तस्याः स्पर्शे घ्राणे च जातिभ्रंशकरपापस्य प्रायश्चित्तं ज्ञेयम्। असोमपायिनां सुरापसम्बन्धिसुराघ्राणे उदकमज्जनं त्रिरघमर्षणं घृतप्राशनञ्च। | | | |
| अधोच्छिष्टस्य नरादिपुरीषस्पर्शः। आदिना श्वकाककङ्कगृध्रादिग्रहणम्। | अधोच्छिष्टस्य सचेलस्नानम्। | | | |
| | ऊर्द्धोच्छिष्टस्योपवासः। पञ्चगव्यपानञ्च। | ० | ॥० पणाः। | यथाशक्ति। |
| अथानुच्छिष्टस्य मलस्पर्शः। मला यथा। "वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः। श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः॥" | पूर्व्वेषां षण्णां नाभेरधः करद्वये च स्पर्शे मृज्जलाभ्यां क्षालनम्। उत्तरेषां षण्णां नाभेरधः करद्वये च स्पर्शे केवलजलेन क्षालनम्। नाभेरूर्द्धं विण्मूत्रप्रभृतिस्पर्शे स्नानम्। चक्षुषि ओष्ठे बाहुकरयोश्च स्पर्शे मृत्तोयगोमयैस्तदङ्गक्षालनं स्नानं उपवासः पञ्चगव्यपानञ्च। | ० | ॥० पणाः। | यथाशक्ति। |
| | भासवानरमार्जारखरोष्ट्रशूकराणाममेध्यस्पर्शे सचेलं स्नानम्। | | | |
| | एतदपि अनुच्छिष्टस्य नाभ्यूर्द्धलेपोपहतविषयम्। अथ उच्छिष्टविषयञ्च। | | | |
| | काकबलाहकाभ्यां विष्ठितस्य श्रोत्रमुखाप्रविष्टामेध्यलिप्तशरीरस्य च तदङ्गक्षालनं स्नानञ्च। अमेध्यानि यथा। "मानुषास्थि शवं विष्ठा रेतो मूत्रार्त्तवं वसा। स्वेदाश्रुदूषिका श्लेष्मा मद्यञ्चामेध्यमुच्यते॥" एषां देहात् प्रच्युतानामेवामेध्यत्वम्। मद्यविण्मूत्रविप्रुषां मुखमण्डलस्पर्शे मृत्तिकागोमयैर्लेपनं स्नानं उपवासः। तदन्ते पञ्चगव्यपानञ्च। अत्र विशेषो यथा। परस्य मानुषस्यास्थिवसाविष्ठार्त्तवमूत्ररेतोमज्जशोणितानां स्पर्शे लेपमार्जनं स्नानं आचमनञ्च। आत्मसम्बन्धिनामेतेषां स्पर्शे परिमार्ज्जनमाचमनञ्च। | ० | ॥० पणाः। | यथाशक्ति। |
| अथ मानुषास्थिस्पर्शः। | सस्नेहमानुषास्थिस्पर्शे स्नानम्। | | | |
| | कामतः स्पर्शे स्नानं गायत्र्यष्टशतजपः। घृतप्राशनं त्रिराचमनञ्च। | | | |
| | कामतोऽत्यन्ताभ्यासे त्रिरात्राशौचान्ते कृच्छ्रपादः। | ० | ॥० पणाः। | यथाशक्ति। |
| | निःस्नेहस्य स्पर्शे आचमनं गोस्पर्शः अर्कदर्शनं वा। कामतोऽत्यन्ताभ्यासे अहोरात्राशौचान्ते एतानि कार्य्याणि। | | | |
| अथ शवनिर्म्माल्यस्पर्शः। | सचेलस्नानम्। | ० | ० | ० |
| अथ रजस्वलायाः सवर्णासवर्णरजस्वलास्पर्शः। | रजस्वलाया ब्राह्मण्याः सवर्णरजस्वलास्पर्शे एकरात्रोपवासः। पञ्चगव्यपानञ्च। एतत् कामतः। | ० | ॥० पणाः। | यथाशक्ति। |

| अथ प्रकीर्णकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| | अकामतस्तदर्द्धं अर्थान्नक्तव्रतम् । | ० | ।० पणाः । | यथाशक्ति । |
| | रजस्वलाया ब्राह्मण्याः शेषवर्णरजस्वलायाः अर्थात् क्षत्रियादिरजस्वलायाः स्पर्शे षड्रात्रोपवासः । एतच्च कामतः । अकामतस्तदर्द्धम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | रजस्वलायाः शूद्रायाः सवर्णरजस्वलास्पर्शे एकरात्रोपवासः पञ्चगव्यपानञ्च । | ० | ॥० पणाः । | यथाशक्ति । |
| | सवर्णयो रजस्वलयोरन्योन्यस्पर्शे एकोपवासः पञ्चगव्यपानञ्च । | ० | ॥० पणाः । | यथाशक्ति । |
| | अत्यन्ताधमरजकादिरजस्वलास्पर्शे द्व्यहसाध्यं ब्रह्मकूर्चव्रतम् । | ० | १ कार्षापणलभ्यकाञ्चनम् । | यथाशक्ति । |
| | एतच्च कामतः । | | | |
| | अकामतस्तदर्द्धम् । | | | |
| | एतत् सर्व्वं शुद्धिकालानन्तरं अर्थात् पञ्चमेऽहनि कार्य्यम् । | | | |
| अथ रजस्वलायाः पतितचाण्डालादिस्पर्शः । आदिना अन्त्यजवायसयोर्ग्रहणम् । | प्रथमेऽह्नि स्पर्शे त्रिरात्रोपवासः । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| | द्वितीयेऽह्नि द्व्यहोपवासः । | ० | १ कार्षापणः । | यथाशक्ति । |
| | तृतीयेऽह्नि अहोरात्रोपवासः । | ० | ॥० पणाः । | यथाशक्ति । |
| | चतुर्थेऽह्नि विशुद्धिस्नानात् पूर्व्वं स्पर्शे नक्तम् । | ० | १ रौप्यमाषकम् । | यथाशक्ति । |
| | एतच्चाकामतः । | | | |
| | कामतः स्पर्शे सर्व्वत्र त्रिरात्रोपवासः । तदन्ते अजाघ्राता कारयितव्या च । | ० | १॥० कार्षापणः । | यथाशक्ति । |
| अथ रजस्वलाया उच्छिष्टशूद्राश्वसूकरादिस्पर्शः । आदिना जम्बूकखरग्राम्यकुक्कुटानां ग्रहणम् । | प्रथमद्वितीयदिनयोरुच्छिष्टशूद्रास्पर्शे द्व्यहोपवासः । | ० | १ कार्षापणः । | यथाशक्ति । |
| | तृतीयदिने स्पर्शे एकोपवासः । | ० | ॥० पणाः । | यथाशक्ति । |
| | चतुर्थदिने स्पर्शे नक्तम् । | ० | २ रजतमाषकौ । | यथाशक्ति । |
| | कुक्कुटादिस्पर्शे सर्व्वत्र नक्तमेव । | ० | २ रजतमाषकौ । | यथाशक्ति । |
| | एतच्च प्रायश्चित्तं विशुद्धिस्नानानन्तरं कर्त्तव्यम् । | | | |
| | एकवृक्षादौ रजस्वलायाश्चाण्डालस्पर्शे अहोरात्रोपवासः । पञ्चगव्यपानञ्च । | ० | ॥० पणाः । | यथाशक्ति । |
| | रजस्वलाया उच्छिष्टचाण्डालादिस्पर्शे द्विजस्त्रीणां प्राजापत्यम् । | १ धेनुः । | ३ कार्षापणाः । | यथाशक्ति । |
| | शूद्राया धेनुदानम् । | | | |
| | एषु प्रायश्चित्तेषु रजस्वलात्वमेव निमित्ततो न ब्राह्मण्यादिभ्यो विशेषः । अत्रापवादः । "तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे । नगरग्रामदाहे च स्पृष्टास्पृष्टि न दुष्यति ॥" | | | |
| अथ चाण्डालादिसङ्करः । आदिना श्वपाकपुक्कसयोर्ग्रहणम् । | संवत्सरैकचाण्डालसङ्करे मासैकं गोमूत्रयावकाहारः । एतत् प्रायश्चित्तं यौनादिवर्जितसंसर्गविषयम् । | १२ धेनवः । | ३६ कार्षापणाः । | १०० गावः । अशक्तौ १०० कार्षापणाः । अभावे सर्व्वस्वम् । |
| | बालवृद्धस्त्रीशूद्राणामर्द्धम् । आषोड़शाद्बालाः । सप्तत्यूर्द्धं स्थविराः । | ६ धेनवः । | १८ कार्षापणाः । | ५० गावः । अशक्तौ ५० कार्षापणाः । अभावे सर्व्वस्वार्द्धम् । |
| | चौर्य्ये प्रायश्चित्ते ब्राह्मणभोजनम् । | | | |
| | एतत् प्रायश्चित्तं ब्राह्मणक्षत्रियविशां तुल्यमेव । | | | |

| अथ प्रकीर्णकानि। | प्रायश्चित्तानि। | तदशक्तौ धेनुदानम्। | तदशक्तौ चूर्णीदानम्। | दक्षिणा। |
|---|---|---|---|---|
| | पूर्व्वोक्तकालादल्पकालसङ्करे चान्द्रायणम्। | सार्द्धसप्तधेन्वसम्भवात् ८ धेनवः। | २२॥० कार्षापणाः। | यथाशक्ति। |
| | स्वल्पतरे पराकः। | ५ धेनवः। | १५ कार्षापणाः। | यथाशक्ति। |
| | अत्यन्तस्वल्पकाले कृच्छ्रद्वयम्। | २ धेनू। | ६ कार्षापणाः। | यथाशक्ति। |
| | शूद्रस्यात्र प्राजापत्यम्। | १ धेनुः। | ३ कार्षापणाः। | यथाशक्ति। |
| | चाण्डालादिसङ्करे गृहादिशुद्धिर्यथा। भवनदहनं अर्थात् हुताशनज्वालासंस्पृष्टम्। प्लवनं अर्थात् पूर्व्वमृत्तिकाकर्षणेन मृत्तिकान्तरदानम्। सर्व्वमृण्मयभाण्डभेदनम्। दारवाणां तक्षणम्। शङ्खशुक्तिरजतसुवर्णचेलानामद्भिः प्रक्षालनम्। कांस्यताम्राणामाकरे अर्थादग्नौ शुद्धिः। सौवीरपयोदधितक्राणां परित्यागः। लाक्षादिरसधान्यादिद्रव्याणां रक्षणम्। घृतादीनां तापनञ्च। | | | |
| | एकस्मिन्नेव कूपे द्विजानां चाण्डालानाञ्च सह जलपानं कुर्व्वतां संसर्गदुष्टानां उपवासः। पञ्चगव्यपानञ्च। | ० | ॥० पणाः। | यथाशक्ति। |
| | बालापत्यारोगिगर्भिणीवृद्धानां नक्तम्। | ० | २ रजतरत्तिके। | यथाशक्ति। |
| | बालानां प्रहरद्वयमभोजनम्। | ० | १ रजतरत्तिका। | यथाशक्ति। |
| | चर्म्मकारादीनामविज्ञातसङ्करे तु चाण्डालसङ्करप्रायश्चित्तस्य षष्ठो भागः कर्त्तव्यः। संहतानां एकस्मिन्नुपहते तस्यैव शोधनम्। न तु तत्स्पृष्टिनां सर्व्वेषां शोधनम्। एकशाखापाषाणादौ चाण्डालादिभिः सहारोहणे ब्राह्मणस्य स्नानमात्रम्। | | | |
| | तत्र फलभोजने ब्राह्मणानुज्ञापनं सचेलस्नानं अहोरात्रोपवासः पञ्चगव्यपानञ्च। एतदनवधाने। | ० | ॥० पणाः। | यथाशक्ति। |
| | सन्निधाने त्रिरात्रोपवासः। पञ्चगव्यपानञ्च। | ० | १॥० कार्षापणः। | यथाशक्ति। |
| | एतदुभयं ज्ञानविषयम्। अज्ञाने एकवृक्षादौ चाण्डालादिभिः सह फलभोजने अघमर्षणम्। एकावयविद्वारा परम्परासंस्पर्शेऽपि स्नानादिकम्। अत्रापवादः। "रथ्याकर्द्दमतोयानि नावः पन्थास्तृणानि च। स्पर्शनान्न प्रदुष्यन्ति पक्वेष्टचितानि च॥" तृणानि तृणसमूहः। पक्वेष्टचितानि मठादीनि। द्वितीयसंसर्गितृतीयसंसर्गिणोर्हस्तपादप्रक्षालनपूर्व्वकमाचमनम्। चतुर्थसंसर्गे दोषाभावः। | | | |
| | इत्यस्पृश्यस्पर्शप्रायश्चित्तम्॥ * ॥ | | | |
| अथ रहस्यपापानि। | रहस्यकृते पापे रहस्यप्रायश्चित्तं करणीयम्। अन्येनाविदितमित्यर्थः। तत्र यदि कर्त्ता स्वयं प्रायश्चित्तानभिज्ञस्तदा कस्यचिद्रहस्यपापस्य किं रहस्यप्रायश्चित्तमिति सामान्येन प्रायश्चित्ताभिज्ञं पृष्ट्वा रहस्यं प्रायश्चित्तं कुर्य्यात्। तत्र यदि | | | |

| अथ प्रकीर्णकानि । | प्रायश्चित्तानि । | तदशक्तौ धेनुदानम् । | तदशक्तौ चूर्णीदानम् । | दक्षिणा । |
|---|---|---|---|---|
| | मरणान्तिकं प्रायश्चित्तं तत्र रहस्यकृतेऽपि मरणमेव कर्त्तव्यम् । यत्र तु व्रतादिकं तत्र जातिशक्तिगुणसत्कृद्धाद्यपेक्षया प्रकाशकृतपापोक्तप्रायश्चित्तस्य विंशतिभागविंशद्भागषष्टिभागाः कल्प्याः । | | | |
| | अथवा महापातकेष्वकामतो मनूक्तमाब्दिकं व्रतं करणीयम् । | १५ धेनवः । | ४५ कार्षापणाः । | ६ गावः । अशक्तौ ५८६॥ कार्षापणाः । |
| | कामतो द्वैगुण्यम् । | ३० धेनवः । | ६० कार्षापणाः । | १७ गावः । अशक्तौ १६॥८१३॥ कार्षापणाः । |
| | अन्येषु पापेषु गुरुलाघवापेक्षया प्राणायामशतमेव एकाहद्व्यहत्र्यहक्रमेण मासं षण्मासं संवत्सरं वाभ्यसनीयम् । व्रतकरणाशक्तेनापि जपहोमध्यानतीर्थसेवादानवेदाभ्यासादयः कार्य्याः । इति रहस्यप्रायश्चित्तम् ॥ | | | |

इति शूलपाणिकृतप्रायश्चित्तविवेकोक्तनवविधपापानां प्रायश्चित्तानि समाप्तानि ॥ ❋ ॥

प्रायिकं, त्रि, (प्रायेण प्राये वा भवमिति । प्राय + ठक् ।) बाहुल्ये भवम् । यथा । "वैषम्यज्ञाने तु प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणादिकम् ।" इति प्रायश्चित्ततत्त्वम् ॥

प्रायुद्वेषी, [ न् ] पुं, (प्रायुधि प्रशस्तयुद्धादिस्थाने द्वेषते शब्दायते इति । द्वेष् + णिनिः । ) घोटकः । इति शब्दचन्द्रिका ॥

प्रायोज्यं, त्रि, (प्र + आ + युज् + णिच् + यत् । ) प्रयोजनार्हम् । यथा । प्रायोज्यं न विभज्येत । यद्यस्य प्रयोजनार्हं पुस्तकादि तन्मूल्यैः सह न विभजनीयमिति दायभागः ॥

प्रायोपविष्टः, त्रि, (प्रायेण मरणार्थमनशनेन उपविष्टः । ) प्रायोपवेशविशिष्टः । यथा,—
"प्रायोपविष्टं गङ्गायां परीतं परमर्षिभिः ॥"
इति श्रीभागवतम् ।
"प्रायेण मृत्युपर्य्यन्तानशनेनोपविष्टम् ।" इति तट्टीकायां श्रीधरस्वामी ॥

प्रायोपवेशः, पुं, ( प्रायेण मृत्युनिमित्तकानशनेन उपवेशः स्थितिः ।) सन्न्यासपूर्ब्बकानशनस्थितिः । यथा,—
"प्रायोपवेशो राजर्षेर्विप्रशापात् परीक्षितः ॥"
इति श्रीभागवते १२ स्कन्धः ॥

प्रारब्धं, क्ली, (प्रकृष्टमारब्धं स्वकार्य्यजननायेति ।) प्राक्तनम् । शरीरारम्भकादृष्टविशेषः । यथा,—
"प्रारब्धकर्म्मणां भोगादेव क्षयः ॥" इति स्मृतिः ।
"प्रारब्धमश्नन्नभिमानशून्यः ।"
इति श्रीभागवतम् ॥
"प्रारब्धकर्म्मविक्षेपाद्वासना तु न नश्यति ॥"
इति भगवद्गीतायां मधुसूदनसरस्वती च ॥
( प्र + आ + रभ् + कर्म्मणि क्तः । कृतारम्भे, त्रि । यथा, रघौ । १४ । ७ ।
"अथाभिषेकं रघुवंशकेतोः
प्रारब्धमानन्दजलैर्जनन्योः ।
निर्वर्त्तयामासुरमात्यवृद्धा-
स्तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥")

प्रारब्धिः, स्त्री, ( प्र + आ + रभ् + क्तिन् । ) गजबन्धनरज्जुः । इति हारावली ॥

प्रारम्भः, पुं, ( प्र + आ + रभ् + भावे घञ् । मुम् च । ) प्रकर्षेण आरम्भः । यथा, स्मृतिः ।
"प्रारम्भे कर्म्मणां विप्रः पुण्डरीकं स्मरेद्धरिम् ॥"
( प्रारभ्यते इति । प्र + आ + रभ् + कर्म्मणि घञ् । मुम् च । कर्म्म । यथा, मार्कण्डेयपुराणे । ५१ । १७ ।
"शुभाशुभञ्च कुशलैः कुमारोऽन्यो ब्रवीति वै । तत्रापि दुष्टे चाक्षेपः प्रारम्भत्याग एव च ॥"
प्रशस्त आरम्भो योगो यस्येति विग्रहे । योगी । यथा, रघुः । १० । ६ ।
"प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥")

प्रार्थनं, क्ली, ( प्र + अर्थ + ल्युट् । ) प्रकर्षेण याचनम् । तत्पर्य्यायः । याच्ञा २ अभिशस्तिः ३ याचना ४ अर्थना ५ प्रार्थना ६ । इति शब्दरत्नावली ॥ ( यथा, महाभारते । ३ । १४६ । ३७ ।
"युगक्षयकृता धर्म्माः प्रार्थनानि विकुर्व्वते ।
एतत् कलियुगं नाम अचिराद् यत् प्रवर्त्तते ॥")

प्रार्थना, स्त्री, ( प्र + अर्थ + णिच् + युच् । ) प्रकर्षेण याचनम् । (यथा, महाभारते ।३।२१२।८१।
"सन्तो दिग्जलमाकाशं गौरन्नं प्रार्थना
विषम् ।
आढ्यस्य ब्राह्मणः कालः कथं वा यच्च !
मन्यसे ॥")

प्रार्थनीयं, क्ली, ( प्रार्थ्यते इति । प्र + अर्थ + णिच् + अनीयर् ।) द्वापरयुगम् । इति शब्दरत्नावली ॥ प्रार्थनाविषये, त्रि ॥ ( यथा, पञ्चतन्त्रे । २ । ११६ ।
"ततस्तयोः स्वभूपं बुद्ध्वा एकस्य वरः प्रार्थनीयः ॥")

प्रार्थितः, त्रि, (प्रार्थ्यते स्मेति । प्र + अर्थ + क्तः । ) याचितः । (यथा, देवीभागवते । २ । ६ । ५६ ।
"प्रार्थिता पतिना कुन्ती ददौ मन्त्रं दयान्विता ।
एकपुत्त्रप्रबन्धेन माद्री पतिमते स्थिता ॥")
शत्रुसंरुद्धः । अभिहितः । इति मेदिनी ॥ हतः । इति त्रिकाण्डशेषः ॥

प्रालम्बं, क्ली, (प्रालम्बते इति । लबि अवस्रंसने + अच् । ) कण्ठात् ऋजुलम्बमानमाल्यम् । इत्यमरः । २।६।१३६ ॥ (यथा, रघौ । ६ । १४ ।
"विस्रस्तमंसादपरो विलासी
रत्नानुविद्धाङ्गदकोटिलग्नम् ।
प्रालम्बमुत्कृष्य यथावकाशं
निनाय साचीकृतचारुवक्त्रः ॥"
प्रकर्षेण लम्बमाने, त्रि ॥ )

प्रालम्बिका, स्त्री, (प्रालम्बते इति । अच् । संज्ञायां कन् । टापि अत इत्वम् ।) स्वर्णरचितलम्बन्तिका । सुवर्णहारः । इत्यमरः ।२।६।१०४॥

प्रालेयं, क्ली, ( प्रकर्षेण लीयन्ते लीना भवन्ति पदार्था अत्रेति प्रलयो हिमालयस्तत आगतम् । प्रलय + अण् । "केकयमित्त्रयुप्रलयानां यादेरियः ।" ७ । ३ । २ । इति यस्येयादेशः ।) हिमम् । इत्यमरः । १ । ३ । १८ ॥ ( यथा, देवीभागवते । ४ । ५ । १३ ।
"नरनारायणौ चैव चेरतुस्तप उत्तमम् ।
प्रालेयाद्रिं समागत्य तीर्थे वदरिकाश्रमे ॥")

(अप्सरोभेदे, स्त्री। यथा, हरिवंशे ।२१८।४७।
"काश्या शारद्वती चैव मौलेयाप्सरसः स्मृताः॥")

मौरजिकः, त्रि, (मुरजस्य वादनं शिल्पमस्य। मुरज+"शिल्पम्।"४।४।५५। इति ठक्।) मुरजवादकः। इत्यमरः।२।१०।१३॥

मौर्ख्यं, क्ली, (मूर्खस्य भावः। मूर्ख+"वर्णदृढा-दिभ्यः ष्यञ् च।"५।१।१२३। इति ष्यञ्।) जाड्यम्। इति हेमचन्द्रः।२।२२६॥ (यथा, सुश्रुते शारीरस्थाने ४ अः।
"अनवस्थितता मौर्ख्यं भीरुत्वं सलिलार्थिता॥")

मौर्व्वी, स्त्री, (मूर्व्वाया विकारः। मूर्व्वा+"अव-यवे च प्राण्योषधिवृक्षेभ्यः।" ४।३।१३५। इति अण्। ङीप्।) धनुर्गुणः। इत्यमरः।२।८।८५। (यथा, रघुः।१।१९।
"शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्व्वी धनुषि चातता॥")
अजशृङ्गी। इति रत्नमाला॥ कोँगा इति भाषा॥ (मूर्व्वामयी। यथा, मनौ।२।४२।
"मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला।
क्षत्त्रियस्य तु मौर्व्वी ज्या वैश्यस्य शणता-न्तवी॥")

मौलः, पुं, (मूलं वेत्तीति। मूल+अण्।) भूम्यादे-र्मूलज्ञाता। मौड़ल् इति भाषा। यथा,—
"यत् परम्परया मौलाः सामन्ताः स्वामिनं विदुः।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही॥"
इति दायतत्त्वम्॥
तस्य लक्षणं यथा,—
"ये तत्र पूर्व्वं सामन्ताः पश्चाद्देशान्तरं गताः।
तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्त्तिताः॥"
इति मिताक्षरा॥
(विजिगीष्वरिमध्योदासीनः। यथा, कामन्द-कीये।८।३४।
"चत्वारः पार्थिवा मौलाः पृथङ्मित्रैः सहा-ष्टकम्॥"
मूलभूते, त्रि। यथा, तत्रैव।८।२५। [था:।
"मौला द्वादश चाख्याता द्वासप्ततिस्तथा च
सप्ततिश्चाधिका ह्येताः सर्व्वं प्रकृतिमण्डलम्॥")

मौलिः, पुं, स्त्री, (मूल+सुतङ्गमादित्वात् इञ्।) चूड़ा। (यथा, महाभारते।६।५६।५।
"एवमुक्त्वा स वामेन पदा मौलिमुपास्पृशत्॥
शिरश्च राजसिंहस्य पादेन समलोड़येत्॥")
किरीटम्। (यथा, हरिवंशे।९७।३०।
"दृश्यन्ते मया मौलिरुद्धृता वक्षामयात्॥")
संयतकेशः। इत्यमरः।३।३।१९२। (यथा, रघौ।७।६६।
"स चापकोटीनिहितैकबाहुः
शिरस्त्रनिष्कर्षणभिन्नमौलिः।
ललाटबद्धश्रमवारिबिन्दु-
र्भीतां प्रियामेत्य वचो बभाषे॥")
मस्तकम्। इति हेमचन्द्रः।३।२।२३०॥
(यथा, आर्य्यासप्तशत्याम्।४२४।)
"भालनयनेऽस्मि रिन्दुर्मौलौ गात्रे भुजङ्गमणि-दीपाः॥"
प्रधानः। यथा, मार्कण्डेये।५९।१४।
"मौलयस्ते महाकायाः शाकपोतकरम्भकाः॥")

मौलिः, पुं, (मूलस्यादूरभवः। मूल+सुतङ्ग-मादित्वादिञ्।) अशोकवृक्षः। इति मेदिनी॥

मौलिः, स्त्री, (मूले जाता। मूल+इञ्।) भूमिः। इति मेदिनी॥

मौलिकः, पुं, (मूले आदौ जातः। मूल+ठञ्।) कुलीनभिन्नः। यथा राढ़ीयवारेन्द्रब्राह्मणस्य श्रोत्रियः तथा कायस्थस्य मौलिकः। एवं दाक्षि-णात्यवैदिकब्राह्मणस्य अन्यपूर्व्वापरिणीतापि तत्-पदवाच्यः। वङ्गजकायस्थस्य स च मध्यल्पशब्द-वाच्यः। यथा। अथ मध्यल्पलक्षणमाह। मध्यल्पशब्दो रूढ़ इत्यल्पः। डित्थडवित्थवत्। मध्यल्पः कुलमध्यस्थकुलीनस्य अभ्यासमल्प-मित्यर्थः। मध्यल्पशब्दस्य लक्षणान्तरम्। कुली-नेतरसिद्धवंशजातत्वे सति दशपुरुषावधि अनवच्छिन्नकुलार्च्चनत्वं मध्यल्पत्वम्। स च द्विविधः। सिद्धः साध्यश्च। सिद्धत्वं प्रकृत-मध्यल्पत्वम्। प्रकृतसिद्धवंशजातत्वे सति दश-पुरुषावधिकुलार्च्चकत्वं सिद्धत्वम्। सिद्धपदा-काङ्क्षित्वे सति दशपुरुषावधिकुलार्च्चकत्वं साध्य-त्वम्। अस्य प्रशंसामाह।
"कुलीनकुलरक्षार्थं विवादेषु मीमांसया।
एतेषां गुणमाश्रित्य मध्यल्पः कुलमुत्तमम्॥"
इति कुलदीपिका॥*॥
दक्षिणराढ़ीयकायस्थस्याष्टमौलिका यथा,—
"गौड़ेऽष्टौ कीर्त्तिमन्तस्त्रिरवततिलका मौलिका ये हि विद्या-
स्ते दत्ताः सेनदासाः करगुहसहिताः पालिताः सिंहदेवाः।
ये वा पश्चाभिमुख्याः क्षितिविनयभुवः सप्ततिस्ते द्विपूर्व्वा
मित्राद्या वीक्ष्य राज्ञा चरणगुणयुता मौलिक-त्वेन साध्याः॥"
अपि च।
"सेनो दत्तः करो देवो दासो देवः प्रतिष्ठितः।
पालितः सिंहधर्म्मज्ञो गुहः सप्तमौलिकाः स्मृताः॥"*॥
द्विसप्ततिसाध्यमौलिका यथा,—
"होड़ः खरधरधरणौ नाग
आयिच सोमः पैसुर साम्नः।
भञ्जो विन्दो गुह वल लोधः
शर्म्मा वर्म्मा हुइ भूँयि चन्द्रः॥
रुद्रो रक्षित राजादित्यो
विष्णुर्नागः खिल पिल सूतः।
इन्द्रो शुभः पालो भद्र
ओमश्चाङ्कुर वन्धुर नाथः॥
शाँयिर्हैशो मानो गण्डो
राहा राणा राहुत साना।
दाहा दाना गण उपमाना॥
श्यामः चौमो घर वै ओषः
वीरस्तेजश्चार्णव आशः।
शक्तिभूँतो ब्रह्मो शानः
क्षेमो हेमो वर्द्धन रङ्गः।
गुइः कीर्त्तियंशः कुण्डो
नन्दी शीलो धनुर्गुणः॥"
इति द्विसप्ततिमौलिकाः॥*॥
अन्यच्च।
"देवो भूदेवभक्तो गुहसहशगुणो दास ईशान-दासः
सेनो दत्तः सुदत्तोऽऽहितजनचयः पालितो धर्म्मपालः।
सिंहः सिंहप्रतापः क्षितिनिकरकरादानदक्षः करोऽष्टौ
गौड़ेऽष्टौ संस्थितास्ते गुणगणनिपुणा मौलिक-त्वेन सिद्धाः॥*॥
होड़नागधरणीखिलसोमा
भञ्जविन्दगुहराजराहुताः।
रुद्रपालबलसामरक्षिता
लोधशर्म्मभुँयिवर्म्मवन्धराः॥
चन्द्रशाँयिगुयिभद्रपैसुरा
गण्डगुप्तधरकीर्त्तिवर्द्धनाः।
क्षेमहैमगणनायविष्णवो
ब्रह्मरङ्गपिलहुइधनुर्गुणाः॥
तेजोऽर्णवस्वरधरायिच शक्तिभूताः
चौमौष शान विदशील यशोम नन्दी।
दाहाङ्कुरेन्द्रशुभकुण्डमनोपमाना
सानाशगूतविदिता भुवि कीर्त्तिमन्तः॥
देशादित्यौ राण राहा साना च श्यामक-स्तथा।
द्विसप्ततिमिताः साध्या मौलिका विदिताः क्षितौ॥"
इति कुलाचार्य्यकारिका॥*॥
(देशविशेषः। यथा, मार्कण्डेये।५७।४८।
"पौरिका मौलिकाश्चैव अश्मका भोग-वर्द्धनाः॥")
त्रि, मूलसम्बन्धिनि मौलसम्बन्धिनि च॥ (भार-भूतं मूलं हरति वहत्यावहति वा। मूल+"तद्धरति वहत्यावहति भाराद् वंशादिभ्यः।" ५।१।५०। इति ठञ्। मूलभारहारके मूलभार-वाहके मूलभारानेतरि च। इति व्याकरणम्॥)

मौषलं, क्ली, (मुषलमिव। मुषलस्येदमिति वा। मुषल+अण्।) मुषलवत्। यथा,—
"गङ्गायां मौषलं स्नानं महापातकनाश-नम्।"
इति प्रायश्चित्ततत्त्वधृतभविष्यपुराणवचनम्॥
महाभारतस्याष्टादशपर्व्वान्तर्गतपर्व्वविशेषः। यथा,—
"मौषलं पर्व्व चोद्दिष्टं ततो घोरं सुदारुणम्।
महाप्रस्थानिकं पर्व्व स्वर्गारोहणिकं ततः॥"
इति महाभारते आदिपर्व्व॥
मुषलसम्बन्धिनि, त्रि॥

मौष्टा, स्त्री, मुष्टिप्रहरणक्रीड़ा। इत्यमरः।३।५।५॥ "मुष्टिप्रहरणं अस्यां क्रीड़ायां मौष्टा णः(अण्) णित्त्वे वृद्धिरिति वृद्धिः यचोर्लोप इति इकारलोपः। स्त्रियामत इत्याप्।" इति तट्टीकायां भरतः॥

मौहूर्त्तः, पुं, (मुहूर्त्तं अधीते वेद वा। मुहूर्त्त+"तदधीते तद्वेद।" ४।२।५९। इत्यण्।) ज्योतिर्व्वेत्ता। इत्यमरः।२।८।१४॥ (यथा, महाभारते।१२।१२१।४६।

"भिक्षुकाः प्राड्विवाकाश्च मौहूर्त्ता दैव-
चिन्तकाः॥")

मौहूर्त्तिकः, पुं, (मुहूर्त्तं तद्बोधकं शास्त्रमधीते वेद वा। मुहूर्त्त+"क्रतूक्थादिसूत्रान्तात् ठक्।" ४।२।६०। इति ठक्।) ज्योतिर्व्वेत्ता। इत्यमरः।२।८।१४॥ (यथा, कथासरित्सागरे।२२।२३।

"ततो मौहूर्त्तिकादेशादन्येद्युर्व्वरकन्यका।
सा मया परिणीता भूम्निलिताखिलबन्धुना॥"

दक्षकन्यामुहूर्त्तोद्भवदेवगणविशेषः। यथा, भागवते।६।६।९।

"मौहूर्त्तिका देवगणा मुहूर्त्तायाश्च जज्ञिरे॥"

मुहूर्त्तोद्भवे, त्रि। यथा, भागवते।५।१३।२३।

"मौहूर्त्तिकादुयस्य समागमाच्च मे
दुस्तर्कमूलोऽपहतोऽविवेकः॥")

म्ना, अभ्यासे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-अनिट्।) अभ्यासः पौनःपुन्येनानुशीलनम्। मनति सन्ध्यां ब्राह्मणः। इति दुर्गादासः॥

म्रच, संघाते। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) रेफयुक्तादिः। म्रचति पयसा शक्तून् लोकः। इति दुर्गादासः॥

म्रच, क म्रक्षणे। स्नेहने। इति कविकल्पद्रुमः॥ (चुरा०-पर०-सक०-सेट्।) रेफयुक्तादिः। म्रक्षणं द्रव्यस्य द्रव्यान्तरेण योजनम्। क, म्रचयति घृतेनान्नं लोकः। इति दुर्गादासः॥

म्रचः, पुं, (म्रच+घञ्।) खड्गोपगूहनम्। इति त्रिकाण्डशेषः॥ म्रचणश्च॥ (वधः। यथा, ऋग्वेदे।८।५०।१०।

"उग्रबाहुर्म्रक्षकृत्वा पुरन्दरो यदिमे शृणवद्धवम्।"

"म्रक्षकृत्वा वधकर्त्ता।"इति तद्भाष्ये सायणः॥)

म्रचणं, क्ली, (म्रच+कर्म्मणि ल्युट्।) तैलम्। इति हेमचन्द्रः।३।८९॥ द्रव्यस्य द्रव्यान्तरेण संयोजनम्। स्नेहनम्। राशीकरणम्। इति म्रचधातोर्भावेऽनट् प्रत्ययेन निष्पन्नम्॥

म्रद, म ष ङ चोदे। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-सक०-सेट्।) रेफयुक्तः। चोदश्चूर्णीकरणम्। म, म्रदयति। ष, म्रदा। ङ, म्रदते काननं दन्ती। इति दुर्गादासः॥

म्रदिमा, [न्] पुं, (मृदोर्भावः। मृदु+"पृथ्वादिभ्य इमनिज्वा।" ५।१।१२२। इति इमनिच्। "र ऋतो हलादेर्लघोः।" ६।४।१६१। इति ऋकारस्य रादेशः। "टेः।" ६।४।१५५। इति टेर्लोपः।) मृदुता। यथा, राजतरङ्गिण्याम्।८।५६६।

"म्रदिम्ना पापिनस्तस्य नाज्ञायि क्रूरता जनैः।
मधुदिग्धी विषस्येव शक्तिः प्राणापहारिणी॥")

म्रदिष्ठः, त्रि, अतिशयमृदुः। मृदुशब्दादिष्ठप्रत्ययेन निष्पन्नः॥

म्रदीयान् [स्] त्रि, अतिशयमृदुः। मृदुशब्दादीयसुप्रत्ययेन निष्पन्नः॥

म्रातनं, क्ली, कैवर्त्तीमुस्तकम्। इति शब्दचन्द्रिका॥

म्रुच, उ इर् गत्याम्। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्। क्वावेट्।) उ, म्रोचित्वा म्रोक्त्वा। इर्, अम्रुचत् अम्रोचीत्। इति दुर्गादासः॥

म्रुञ्च, उ गत्याम्। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) उ, म्रुञ्चित्वा म्रुक्त्वा। इति दुर्गादासः॥

म्रेट, ऋ उन्मादे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-अक०-सेट्।) ऋ, अमिम्रेटत्। म्रेटति लोक उन्माद्यतीत्यर्थः। इति दुर्गादासः॥

म्रेड, ऋ उन्मादे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-अक०-सेट्।) ऋ, अमिम्रेडत्। म्रेडति लोक उन्माद्यतीत्यर्थः। इति दुर्गादासः॥

म्लक्तं, क्ली, (म्लच+क्तः।) चोरितम्।। यथा,—

"चोरितं मुषितं म्लक्तं प्रतीतन्तु प्रतीच्छितम्॥"
इति भूरिप्रयोगः॥

म्लानं, त्रि, (म्लै हर्षक्षये+क्तः। "संयोगादेरातो धातोर्यण्वतः।"८।२।४३। इति निष्ठातस्य नः।) मलिनम्। यथा,—

"मलिनं कच्चरं म्लानं कश्मलञ्च मलीमसम्॥"
इति हेमचन्द्रः॥

(यथा, मार्कण्डेये।६२।१६।

"स चिन्तयामास तदा किं न्वेषा गजगामिनी।
निश्वासपवनम्लाना गिरावत्र वरूथिनी॥")

दुर्बलम्। (यथा,—

"अन्तेषु सूनं परिहीनमध्यं
म्लानन्तथान्तेषु च मध्यसूनम्॥"

इति माधवकृतरुग्विनिश्चयस्य पाण्डुरोगव्याख्याने विजयेनोक्तम्॥ (म्लै+भावे क्तः। म्लानिः। यथा, मार्कण्डेये।३५।२४।

"रथ्यावसथपानस्नानस्नुतपानस्नानकर्म्मसु।
आचामेच्च यथान्यायं वासो विपरिधाय च॥")

म्लानिः, स्त्री, (म्लै+निः। स च नित्। इत्युज्ज्वलदत्तः।४।५१।) कान्तिक्षयः। यथा, देवीभागवते।१।९।१८।

"प्रेक्षकस्तु तदा ब्रह्मा देवी चैवान्तरीक्षगा।।
न मम्लतुस्तदा तौ तु विष्णुस्तु म्लानिमाप्तवान्॥")

म्लिष्टं, क्ली, (म्लेच्छ्+क्तः+"क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धेत्यादि।" ७।२।१८। इति निपातितम्।) अस्पष्टवाक्यम्। तत्पर्य्यायः। अविस्पष्टम् २। इत्यमरः।१।६।२१॥

म्लिष्टः, त्रि, (म्लेच्छ+क्तः।) अव्यक्तवाक्। म्लानः। इति मेदिनी। टे, २५॥

म्लुच, उ इर् गत्याम्। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) उ, म्लोचित्वा म्लुक्त्वा। इर्, अम्लुचत् अम्लोचीत्। इति दुर्गादासः॥

म्लेच्छ, कि देश्योक्तौ। इति कविकल्पद्रुमः॥ (चुरा०-वा भ्वा०-पर०-अक०-सक० च-सेट्।) देश्या ग्राम्या उक्तिर्देश्योक्तिरसंस्कृतकथनमित्यर्थः। कि, म्लेच्छयति म्लेच्छति मूढ़ः। अल्पविद्योऽप्यसौ विद्वान्न म्लेच्छति घृतव्रत इति हलायुधः॥ अनेकार्थत्वादव्यक्तशब्देऽपि। तथा चामरः। अथ म्लिष्टमविस्पष्टमिति। म्लेच्छ अव्यक्तायां वाचि इति शाब्दः। तन्न रमानाथस्तु। म्लेच्छति वटुर्व्यक्तं वदतीत्यर्थः। अव्यक्तायामिति पाठे कुत्सितायां वाचीत्यर्थः।

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥'

इति भाष्यवचनेन नञोऽप्राशस्त्यार्थत्वात् इति व्याख्यानाय हलायुधोक्तमुदाहृतवान्। इति दुर्गादासः॥

म्लेच्छं, क्ली, (म्लेच्छदेशः उत्पत्तिस्थानत्वेनास्त्यस्य। अर्शआद्यच्।) हिङ्गुलम्। इति राजनिर्घण्टः॥ (तथास्य पर्य्यायः।

"हिङ्गुलन्दरदं म्लेच्छमिङ्गुलञ्चूर्णपारदम्॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

म्लेच्छः, पुं, (म्लेच्छयति वा म्लेच्छति असंस्कृतं वदतीति। म्लेच्छ्+अच्।) किरातशबरपुलिन्दादिजातिः। इत्यमरः॥ पामरभेदः। पापरक्तः। अपभाषणम्। इति मेदिनी। छे, ६॥ म्लेच्छादीनां सर्व्वधर्म्मराहित्यमुक्तं यथा, हरिवंशे।१४।१५—१९।

"सगरः स्वां प्रतिज्ञाञ्च गुरोर्व्वाक्यं निशम्य च।
धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह॥
अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत्।
जवनानां शिरः सर्व्वं काम्बोजानान्तथैव च॥
पारदा मुक्तकेशाश्च पह्नवाः श्मश्रुधारिणः।
निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना॥
शका जवनकाम्बोजाः पारदाः पह्नवास्तथा।
कोलसर्पाः समहिषा दार्व्वाश्चोलाः सकेरलाः।
सर्व्वे ते क्षत्त्रियास्तात धर्म्मस्तेषां निराकृतः॥
वशिष्ठवचनाद्राजन् सगरेण महात्मना॥"

शकानां शकदेशोद्भवानां क्षत्त्रियाणाम्। एवं जवनादीनामिति। अत्र जवनशब्दस्तद्देशोद्भववाची चवर्गतृतीयादिः। जवनो देशवेगिनोरिति त्रिकाण्डशेषाभिधानदर्शनात्॥ * ॥ तेषां म्लेच्छत्वमप्युक्तं विष्णुपुराणे। तथाहतान् जवनादीनुपक्रम्य ते चात्मधर्म्मपरित्यागात् म्लेच्छत्वं ययुरिति। बौधायनः।

"गोमांसखादको यश्च विरुद्धं बहु भाषते।
सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते॥"
इति प्रायश्चित्ततत्त्वम्॥ * ॥

अपिच। देवयान्यां ययातेर्द्वौ पुत्रौ यदुः तुर्व्वसुश्च।

शर्म्मिष्ठायां त्रयः पुत्त्राः द्रुह्युः अनुः पुरुश्च । तत्र यदुप्रभृतयश्चत्वारः पितुराज्ञाहेलनं कृतवन्तः पित्रा शप्ताः । ज्येष्ठपुत्त्रं यदुं शशाप तव वंशे राजा चक्रवर्त्ती मा भूदिति । तुर्व्वसुद्रुह्यून् शशाप युष्माकं वंश्या वेदवाह्या म्लेच्छा भविष्यन्ति । इति श्रीभागवतमतम् ॥ * ॥
("असृजत् पह्लवान् पुच्छात् प्रस्रावाद्द्राविड़ान्
शकान् ।
योनिदेशाच्च यवनान् शकृतः शवरान् वहून् ॥
मूत्रतश्चासृजत् काश्चीञ्छरभांश्चैव पार्श्वतः
पौण्ड्रान् किरातान् यवनान् सिंहलान् वर्व्वरान्
खशान् ॥
चिवुकांश्च पुलिन्दांश्च चीनान् हूनान् सके-
रलान् ।
ससर्ज्ज फेनतः सा गौर्म्लेच्छान् बहुविधानपि ॥"
सा वशिष्ठस्य धेनुः । इति महाभारते ।१।१७६।३५—३७ ॥ ) अन्यच्च । "शकयवनकाम्बोजपारदपह्लवा हन्यमानास्तत्कुलगुरुं वशिष्ठं शरणं ययुः । अथैतान् वशिष्ठो जीवन्मृतकान् कृत्वा सगरमाह । वत्स वत्सालमेभिर्जीवन्मृतकैरनुसृतैः । एते च मयैव त्वत्प्रतिज्ञापालनाय निजधर्म्मद्विजसङ्गपरित्यागं कारिताः । स तथेति तद्गुरुवचनमभिनन्द्य तेषां वेशान्यत्वमकारयत् । यवनान्मुण्डितशिरसोऽर्द्धमुण्डान् शकान् प्रलम्बकेशान् पारदान् पह्लवांश्च श्मश्रुधरान्निःस्वाध्यायवषट्कारानेतानन्यांश्च क्षत्त्रियांश्चकार । ते चात्मधर्म्मपरित्यागाद्ब्राह्मणैश्च परित्यक्ता म्लेच्छतां ययुः ।" इति विष्णुपुराणे ।४।३ । १८—२१ ॥ * ॥ प्रकारान्तरेण तस्योत्पत्तिर्यथा,—
सूत उवाच ।
"वंशे स्वायम्भुवस्यासीदङ्गो नाम प्रजापतिः ।
मृत्योस्तु दुहिता तेन परिणीतातिदुर्म्मुखी ॥
सुतीर्था नाम तस्यास्तु वेनो नाम सुतः
पुरा ।
अधर्म्मनिरतः कामी बलवान् वसुधाधिपः ।
लोकेऽप्यधर्म्मकृज्जातः परभार्य्यापहारकः ॥
धर्म्माचारप्रसिद्ध्यर्थं जगतोऽस्य महर्षिभिः ।
अनुनीतोऽपि न ददावनुज्ञां स यदा ततः ॥
शापेन मारयित्वैनमराजकभयार्द्दिताः ।
ममन्थुर्ब्राह्मणास्तस्य बलाद्देहमकल्मषाः ॥
तत्कायान्मथ्यमानात्तु निपेतुर्म्लेच्छजातयः ।
शरीरे मातुरंशेन कृष्णाञ्जनसमप्रभाः ॥"
इति मत्स्यपुराणे । १० । ३—८ ॥ * ॥
म्लेच्छभाषाभ्यासनिषेधो यथा,—
"न सातयेदिष्टकाभिः फलानि वै फलेन तु ।
न म्लेच्छभाषां शिक्षेत नाकर्षेच्च पदासनम् ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥ * ॥

तस्य मध्यमा तामसी गतिर्यथा, मानवे । १२ ।४३ ।
"हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः ।
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी
गतिः ॥"
( मन्त्रणाकाले म्लेच्छापसारणमुक्तं यथा, मनुसंहितायाम् । ७ । १४९ ।
"जड़मूकान्धबधिरांस्तैर्य्यग्योनान् वयोऽति-
गान् ।
स्त्रीम्लेच्छव्याधितव्यङ्गान् मन्त्रकालेऽपसार-
येत् ॥"
"अथवा एवंविधा मन्त्रिणो न कर्त्तव्याः । बुद्धिविभ्रमसम्भवात् ।" इति तद्भाष्ये मेधातिथिः ॥
म्लेच्छानां पशुधर्म्मित्वम् । यथा, महाभारते ।१। ८४ । १५ ।
"गुरुदारप्रसक्तेषु तिर्य्यग्योनिगतेषु च ।
पशुधर्म्मिषु पापेषु म्लेच्छेषु त्वं भविष्यसि ॥")
म्लेच्छकन्दः, पुं, ( म्लेच्छप्रियः कन्द इति मध्यपदलोपी कर्म्मधारयः । ) लशुनम् । इति राजनिर्घण्टः ॥ ( तस्य पर्य्यायो यथा,—
"लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम्
अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
म्लेच्छजातिः, स्त्री, ( म्लेच्छस्य जातिरिति षष्ठीतत्पुरुषः म्लेच्छरूपा जातिरिति कर्म्मधारयो वा । ) गोमांसखादकबहुविरुद्धभाषकसर्व्वाचारविहीनवर्णः । यथा,—
"गोमांसखादको यस्तु विरुद्धं बहु भाषते ।
सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते ॥"
इति प्रायश्चित्ततत्त्वधृतबौधायनवचनम् ॥
अपि च ।
"भेदाः किरातशवरपुलिन्दा म्लेच्छजातयः ॥"
इत्यमरः । २ । १० । २० ॥
अन्यच्च ।
"पौण्ड्रकाश्चौड्रद्रविड़ाः काम्बोजा यवनाः
शकाः ।
पारदाः पह्लवाश्चीनाः किराताः दरदाः
खशाः ॥
मुखबाहूरुपज्जानां या लोके जातयो वहिः ।
म्लेच्छवाचश्चार्य्यवाचः सर्व्वे ते दस्यवः स्मृताः ॥"
इति मानवे १० अध्यायः ॥
म्लेच्छदेशः, पुं, ( म्लेच्छानां देशः म्लेच्छप्रधानो देशो वा । ) चातुर्व्वर्ण्यव्यवस्थादिरहितस्थानम् । तत्पर्य्यायः । प्रत्यन्तः २ । इत्यमरः । २ । १ । ७ ॥ भारतवर्षस्यान्तं प्रतिगः प्रत्यन्तः । म्लेच्छति शिष्टाचारहीनो भवत्यत्र म्लेच्छः अल् । स चासौ देशश्चेति म्लेच्छदेशः । किंवा म्लेच्छयन्ति असंस्कृतं वदन्ति शिष्टाचारहीना भवन्तीति वा पचाद्यचि म्लेच्छा नीचजातयः तेषां देशो म्लेच्छदेशः । भारतवर्षस्यान्तः शिष्टाचाररहितः कामरूपवङ्गादिः । उक्तञ्च ।
"चातुर्व्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते ।
म्लेच्छदेशः स विज्ञेय आर्य्यावर्त्तस्ततः पर-
मिति ॥"
इति भरतः ॥
( अपि च, मनुः । २ । २३ ।
"कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततःपरम् ॥")
म्लेच्छभोजनं, क्ली, (भुज्यते यदिति । भुज् + कर्म्मणि ल्युट् । ततो म्लेच्छानां भोजनम् । ) यावकः । इति शब्दरत्नावली ॥
म्लेच्छभोजनः, पुं, ( भुज्यतेऽसौ इति । भुज् + ल्युट् । म्लेच्छानां भोजनः । ( गोधूमः । इति त्रिकाण्डशेषः ॥
म्लेच्छमण्डलं, क्ली, (म्लेच्छानां मण्डलं यत्रदेशोऽत्र ।) म्लेच्छदेशः । इति हेमचन्द्रः ॥
म्लेच्छमुखं, क्ली, ( म्लेच्छे म्लेच्छदेशे मुखमुत्पत्तिरस्य । इत्यमरटीकायां रघुनाथः । ) ताम्रम् । इत्यमरः । २ । ९ । ९७ ॥ ( तथास्य पर्य्यायः ।
"ताम्रमौडुम्बरं शुल्वमुडुम्बरमपि स्मृतम् ।
रविप्रियं म्लेच्छमुखं सूर्य्यपर्य्यायनामकम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
"ताम्रमौडुम्बरं शुल्वं विद्यात् म्लेच्छमुख-
न्तथा ॥"
इति गारुड़े २०८ अध्याये ॥)
म्लेच्छाशः, पुं, (म्लेच्छैरश्यते इति । अश् + कर्म्मणि + घञ् । ) म्लेच्छभोजनः । गोधूमः । इति केचित् ॥
म्लेच्छास्यं, क्ली, ( म्लेच्छे म्लेच्छदेशे आस्यमुत्पत्तिरस्य । ) ताम्रम् । इति हारावली ॥
म्लेच्छितं, क्ली, ( म्लेच्छ् देश्योक्तौ + क्तः । ) म्लेच्छभाषा । अपशब्दः । तत्पर्य्यायः । परभाषा २ । इति हारावली ॥
म्लेट, ऋ उन्मादे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् । ) ऋ, अमिम्लेटत् । म्लेटति लोकः उन्माद्यतीत्यर्थः । इति दुर्गादासः ॥
म्लेड़, ऋ उन्मादे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-अक०-सेट् ।) ऋ, अमिम्लेड़त् । म्लेड़ति । उन्माद्यतीत्यर्थः । इति दुर्गादासः ॥
म्लेव, ऋ ङ सेवने । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् । ) ऋ, अमिम्लेवत् । ङ, म्लेवते । इति दुर्गादासः ॥
म्लै, कान्तिसंचये । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट् ।) म्लायति चन्द्रो दिवसे । इति दुर्गादासः ॥

# NOTICE.

AGENTS
Messrs. Trubner & Co., ...on.

AGENT
Pandit Jaistaram Mukundaji, Bombay

## RAJA SIR RADHA...TA'S IMPROVED AND ENLARGED SABDAKALPADRUMA.

*A Sanskrit Encyclopedic Lexicon.*

The new edition is iss... in monthly parts of 8 formes (Royal quarto, 32 pages) each, and we expect to complete it in fou...ars : generally a fasciculus will contain double parts or numbers.

To bring the book w...h reach of the general public, we offer it for sale to those who register themselves as subscribers in ...ia at the lowest possible price of one Rupee for each part, and in countries out of India at 3*s.* for each p... The number of parts in which the new Appendix would be completed, cannot *now* be guessed, they wi...ar the same price except to those who had subscribed before 1st January 1888. Subsequent subscribers ...ndia, if they choose to pay in advance, can obtain the whole work exclusive of the Appendix, for 75 Rupees ...d in countries out of India, for £8. The advance payments being exclusive of Postage. To non-subscribers in an...t of India, the price for each part will be Rs. 1-8 and 4*s.* respectively. Muffussil residents are requested ...end Rs. 10 in advance to ensure their enlistment as subscribers, or in lieu of such payment, to order desp... of books to them by value payable parcels. We make it a rule to defer supplying to subscribers any part ...arts of the work till all arrears due for the preceding ones, are paid.

All remittances an...ommunications, except where special Agents may be preferred, are to be made to Babu Hari Charan Vas... No. 71, Pathuriaghata Street, Calcutta. Subscribers are requested to see that receipts for money (when sent t...im) bear his seal and signature.

We conclude this an...ncement by an earnest appeal to all students of Sanskrit, Savants, Princes and other patrons of learni...n India, Europe and America, to help us to lay before them a grand Repertory of Indo-Aryan learning ...enished with new treasures. We specially urge our claim to the aid of our brother Hindus in all parts of o...country, who cannot but feel it a duty to encourage attempts to preserve and improve the most unique monu...t of the genius, scholarship, industry and philanthropy of our great patrirach of learning and zealous fri... of education whom, we loved to call as the Hindu of Hindus. We hope that by periodical improvements ...d enlargement of its scope, the Sabdakalpadruma of Raja Sir Radhaka... would become the Encyclopædia ...lica of the future, which, it would be the common aim of all to see ac...plished.

THE SABDAKALPAD...A OFFICE,
71, *Pathuriagh...Street,*
*Calcutta,* 20th ...*ugust* 1888.

VARADA PRASADA VASU,
HARI CHARANA VASU,
*Proprietors of the Sab...alpadruma.*